स्थितशास्त्रप्रयोगबलेन अव्यवस्थितलौकिकप्रयोगबाधात् यवराहादिशब्दानामर्थनिर्णयः प्रतिपादितः । एवं (स्मृति) पुनरेकस्मिन् सास्नादिमदर्थे गोगाव्यादयो बहवः शब्दाः प्रयुज्यन्ते तत्र वृद्धव्यवहारावगतप्रतिशब्दसमानाभिधानशक्तिभेदोपपत्तेः शास्त्रस्य सर्वशब्दप्रयोगाणां च लौकिकशब्दैरविशेषात् पदपूर्वकत्वाच्च वाक्यात्मकशास्त्रव्यापारसिद्धेर्न पदगतसाध्वसाधुत्वप्रतिपादने व्यापारो भवति, इतरेतराश्रयत्वप्रसङ्गात् । तथाहि— 'लोकप्रसिद्धशब्दार्थवशं शास्त्रं प्रवर्तते । अतो न लौकिकेष्वव्यवस्था साध्वसाधुत्वनिर्णयः ॥' वाक्यार्थेषु हि श्रुतिस्मृत्याचारविरोधदर्शनात् बाधाबलमानुपूर्व्येणावधृतमिह तु न विपरीतक्रमत्वात् । [ पृ २५३ ] 'लोकादेवाधिगन्तव्या शब्दानां साध्वसाधुता । बाधकाबाधकत्वेन सा च नित्यं व्यवस्थिता ॥ ध्वनिमात्राण्यसाधूनि वर्णा वा केवलात्मनाम् । संघातोऽर्थानपेक्षो वा मातृकाद्युपदेशवत् ॥' तेन भेर्यादिशब्दाः ककारादयश्च प्रत्येकं वर्गा वाऽनर्थकत्वादपशब्दा इति लोकव्यवहारादेवार्थं न साधयन्तीत्यसाधवो गम्यन्ते । गाव्यादयः पुनर्गवादिवदेव साधयन्त्यर्थं तेभ्योऽपि वा यौगपद्ये प्रसिद्धतरत्वादर्थप्रतीतिमुत्पादयन्तीति सत्यपि एकविषयानेकशब्दत्वे हस्तकराद्यादिशब्दवदर्थसाधनत्वात् साधुत्वेनावगम्यन्ते । 'तत्रावाचकत्वेन यदसाधुत्वमुच्यते । तस्य लोकविरुद्धत्वान्न प्रामाण्यं प्रतीयते ॥ अदृष्टविषया चेत्स्यादेतेषां साध्वसाधुता । वेदवाक्यैरनिर्दिष्टा न साऽस्त्यन्यप्रमाणिका ॥'

प्रत्यक्षेण तावदुभयत्राप्यविशेषेण वर्णाः शुद्धाः प्रतीयन्ते । न तद्गते तत्समुदायगते वा साधुत्वासाधुत्वे । न वाऽननुभूतसंबन्धादनुमीयेते । तन्निराकरणाच्च तत्पूर्वकपुरुषवचननिरपेक्षयाऽपि सिद्धा । वेदवचनं पुनर्वस्तुस्वरूपकृतगुणदोषाव्याख्यानपरं विधिप्रतिषेधानपेक्षं नैरर्थक्यप्रमाणत्वेन संभवति । साधुत्वासाधुत्वयोः अननुष्ठानात्मकत्वात् विधिप्रतिषेधाविषयत्वात् । अभिधानाभिधानकारणभूतयोः विधेयप्रतिषेध्यत्वसंभव इति चेत्, प्रतिशब्दमनन्तविधिप्रतिषेधवाक्यानुमानकल्पनानुपपत्तेः ।

'यो हि प्रतिपदं पाठे साधूनां नाध्यवस्यति । विधिवाक्यानि तावन्ति स कथं प्रतिपत्स्यते ॥ अपशब्दाश्च शब्देभ्यो भूयस्त्वेन व्यवस्थिताः । न कलञ्जादिवत्तेषां प्रतिषेध्यत्वसंभवः ॥' भीक्ष्णादीनि हि कलञ्जादीनि च नियतजातिगुणादिरूपेण परिज्ञायमानपरिमाणत्वात् [ पृ. २५४ ] विधिप्रतिषेधगोचरीभवन्ति न तु गवादिगाव्यादीनां जातिरूपेण व्यक्तिरूपेण वा विधिप्रतिषेधावुपपद्येते । न तावत् साधुत्वे जातिगुणत्वात्मकसामान्यरूपेण सर्वव्यक्त्यनुगते विज्ञायेते यदालम्बनौ द्वारेण विधिप्रतिषेधावनुमीयेयाताम् 'साधुभिः भाषेत नासाधुभिः' इति । 'अविभक्ता हि शब्दत्वजातिः शब्दापशब्दयोः । न स्वबान्तरसामान्ये केचिदुर्गं व्यवस्थिते ॥' तेन यद्येकैका व्यक्तिर्विधीयेत प्रतिषिध्येत वा ततो यावत्पद वाक्यान्यनुमिमानस्त्रैलोक्यपूरणदक्षाणि स्मृतिमूलभूतानि वेदवाक्यान्यनुमिमीते । न च तावता कोटिशतभागोऽप्याम्नातुं शक्यते । न चानाम्नातस्य स्मृतिमूलत्वम्, नित्यानुमेयश्रुतिमूलत्वानिष्टत्वात् । न च बाधकत्वावाचकत्वनिबन्धनौ विधिप्रतिषेधौ संभवतः सर्वेषां वाचकत्वात् । 'वाचकैर्भाषितव्यं हि प्राप्तत्वान्न विधीयते । अवाचकनिषेधश्च नाप्राप्तेरवकल्पते ॥' न शूद्रक पिबेद्रामि न पिबेदिति च विधिप्रतिषेधौ संभवतः । अवश्यं च व्याकरणस्मृतिमूलभूतसाधुविधिश्रुतिरसाधुप्रतिषेधश्रुतिरुभयं वा तयोरन्यतमत्वात् कल्पनीयम् । त्रिष्वपि च पक्षेषु साध्वनुशासनसामर्थ्येन लोकमर्यादाभितम् । यदि ह्यपशब्दप्रतिषेधमूलं व्याकरणं तत्र तेषां बहुत्वात् अव्यवस्थितरूपत्वाच्च न स्वरूपमवगन्तुं शक्यते इति 'पञ्च पञ्चनखा भक्ष्याः' इति स्मृतिन्यायेन अनुगतविपरीतभाषणप्रतिषेधोऽर्थापत्तिसिद्धः स्मर्यते । साधुविधिपक्षे तु ते एव स्मर्तव्याः । उभयपक्षे तदनुगमादेव इतरसिद्धेः प्रतिषेधविषयशब्दोपपत्तिः । स एव व्याकरणस्य पक्षत्रयेऽपि एकानुशासननिबन्धनत्वात् कथंचित् संक्षेपोऽवकल्पते । ननु प्रतिशब्दं विधिप्रतिषेधावकल्पते । अनन्तशब्दशास्त्रार्थमशक्यत्वात् इष्टासंभवदर्शनार्थमेव होलाकाधिकरणेऽभिहितम् 'न तस्याऽऽकृतिवचनत्वं व्याप्या, न

कस्यचित्प्रयोजनस्याश्रितम् । न च सर्वप्रधाने वस्तुन्य-नादरो युक्त. । मुख्यतत्त्वं पुनरीदृश येनाद्यापि विवदन्ते ।

' धर्मश्च फलसंबद्धं कर्म यागादि वर्ण्यते । न च व्याकरणे किंचित्तादृक्कर्मोपदिश्यते ॥ धर्मत्वं यश विज्ञानशास्त्रपूर्वप्रयोगयोः । यथेष्टं वर्णितं तच्च न शास्त्रसदृशं मतम् ॥ ' शास्त्रार्थो हि निरूपितरूपो भवति । इह च ज्ञानधर्मत्वमुपन्यस्य अधर्मप्रसङ्गभीतेन [ पृ. २५७ ] शास्त्रपूर्वप्रयोगेऽभ्युदय इति वार्तिककारेणोक्तम् । भाष्यकार आह– ' अथवा पुनरस्तु ज्ञाने धर्म ' इति । न चैवमनियमेन धर्मत्वावधारणं युक्तम् । ' संयद्वयोश्च धर्मत्वं यद्येकस्यावधार्यते । तद्वेतरस्तदर्थत्वान्न धर्मत्वेन गम्यते ॥ ' तदिह यदि तावत् ज्ञानमेव धर्मत्वेनावधारित ततो लोक प्रसिद्धस्यैव प्रयोगस्य ज्ञानात्तु निष्पादितत्वेन सम्यगभ्युपकारनिर्वृत्तौ नाभिवादिप्रयोजनस्याभाव. । शास्त्रपूर्वकप्रयोगपक्षे तु ज्ञानस्य तदङ्गत्वेन निराकाङ्क्षभूतत्वात् । अनन्या प्रयोगनान्तराकाङ्क्षाया यद्यपि क्वचित्फले श्रुति भवेत्तथाऽपि ' द्रव्यसंस्कारकर्म ' ( ४।३।१।१ ) इत्य नेन न्यायेनार्थवादता ज्ञायते । न हि समानाधानो परस्मिन् फलवति ज्ञाते पूर्वस्यापि फलवत्ता ज्ञायते इति वर्णितमेतत् । ' योऽश्वमेधेन यजते य उ चैनमेवं वेद ' इति । किंच– ' आदिमत्त्वाच्च धर्मत्वं नैव ज्ञान प्रयोगयो । न हि व्याकरणापेक्षा वर्तते वैदिकी श्रुतिः ॥ ' यथाम ज्ञान नित्येन वेदेनैव क्रियते तत्र तत्पूर्वप्रयोगविधान कल्पनोपपद्यते । व्याकरणज्ञानं तु पौरुषेय प्र ग्रन्थाधीनत्वात् मन्त्रार्थवादगतानित्यसंयोगपरिहारन्यायेनानादिवेदविषयत्वेन नावधार्यते । ' न च व्याकरणे नित्यं कथंचिदवगम्यते । कर्तृस्मृतिदृढिम्ना हि नित्यपक्षनिराक्रिया ॥' अथापि व्यवहारनित्यतान्यायेन पौरुषेय व्याकरणपरम्पराऽनादि कल्प्येत तथापि ' उक्त तु शब्दपूर्वत्वम् ' ( १।१।८।२९ ) इत्यस्य न्यायस्य स्थितत्वात् । अनेकपुरुषकृतमपि तद्व्याकरण वेदाम्भवनवत् न प्रतिपद्यते । ' न च व्याकरणस्यास्या जातिः काचिद्व्यवस्थिता । अनित्ये ग्रन्थसंपाते सा जातिः क्वावतिष्ठताम् ॥ '

अथ ' छन्दोलक्षणे व्याकरणम् ' इति सत्यपि लक्षणाशब्दनिमित्ते व्यवहारेण नित्येन नित्यो विधिरुपपत्स्यते इति । तदनुपपन्नम् । कुत–– ' अत्यन्तभिन्नरूपत्वाच्छन्दसां लक्षणाद्विना । नैकमालम्बनं किंचिद्विधेरस्तीत्युदाहृतम् ॥ ' ननु वेद एव व्याकरणमित्यत्र दृश्यते । यथाऽऽह– ' तस्मादेषा व्याकृता वागुच्यते ' इति । नैतदस्ति । ' व्याकृता संप्रदायेन वाणी नित्यैव वैदिकी । अनूदितोच्यमानेयं कर्मस्वाध्यायकालयोः ॥' अ याङ्नाया हि लौकिक्या वाच. शिष्याचार्यसंकथेन स्वपरर्णमात्राक्रमैरविप्लुतरूपैर्निरूपिताकारैरेव वैदिकी व्याकृतेत्युच्यते । तस्याश्च मन्त्रब्राह्मणादिमहाया. कर्मसु ज्ञाने प्रयोगे च धर्मोऽस्त्येव । यदपि च ' एक शब्द सम्यग् ज्ञात सुप्रयुक्तः शास्त्रान्वित. स्वर्गे लोके कामधुग्भवति ' इति तदपि स्वाध्यायप्रशंसाशेषभूतमेव । ' अहरह. स्वाध्यायमधीयीत ' इत्यत्र ' अप्येकामृचं यजु साम वा ' इत्येतदवरपक्षे यत्ननियमार्थमुक्तम् । ' योऽपि मन्त्रं समस्तं हि नाधीयीताप्यशक्तितः । तस्य शास्त्रान्वित शब्द एकोऽपि स्वर्गकामधुक् ॥' शास्त्रान्वित इति च यथास्वाध्यायमनुगत इत्यर्थ. । सम्यक्प्रयुक्त इति चोपनयनोपक्रमगुरुमुखग्रहणादर्थपर्यन्त पाठितस्याधीति इत्येवोपपन्नस्य ग्रहणेनोक्तम् । यदपि च ' तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः ' इति, तत्सम्प्रदायागतवैदिकशब्दविनाशप्रतिषेधार्थमेव । वैदिकापेक्षया लौकिकस्य अपशब्दत्व संभवति । तज्ज्ञान च । न च लौकिकादप्यपेतोऽपशब्दो नाम कश्चिदस्ति । गा शब्दी नामपि गव्यादयो श्रोत्रग्रहणेन शब्दत्वादर्थावबोधकत्वात् शब्दबुद्धिमात्रतश्शब्दत्वानुपपत्तेः । अथापि अपशब्द लौकिकादपि अपेतोऽपशब्द आश्रयणीय. । तथापि ' न म्लेच्छभाषां शिक्षेत ' इत्येवमादिस्मृत्यनुसरणेन हिमवद्विन्ध्यान्तरालवर्त्यार्यावर्तनिवास्युपलक्षितधर्माधिकार्यार्यावर्तनिवासि व्यतिरिक्तवर्बरादिभाषागतस्य म्लेच्छितकरणस्यानाधिकरणापशब्दत्वज्ञानात् तेन भाषण प्रतिषिध्यते । युक्त च सम्यक्संपादितदीयाचरणवत्परिहरणीयत्व न त्वार्यावर्तनिवासिप्रयुक्तेषु गा यादिषु म्लेच्छति-

यत. पदार्थसंदेहास्तावदृहनो वृद्धव्यवहारादेव निवर्तन्ते । शेषाश्च निगमनिरुक्तव्याकरणकाभियुक्तेभ्य. सर्वेषा अर्थप्रतिपादनपरत्वात् । व्याकरणेन पुनरत्यन्तं कृत्यार्थं पदस्वरूपमात्रे अन्वाख्यायमाने दूरादपेतमेवार्थज्ञानम् । तथाहि ‘ धातुभ्य. कल्पिते नाम्नि क्रियायोगोऽनुगम्यते । न चाभिधानवेलायां तत्प्रतीतिर्मनागपि ॥ ’ ‘ गमेर्डो. ’ ( उणादिसू. २३९ ) इत्येतद्रूपमात्रानुसारी हि गन्तृमात्रमेव गोशब्दवाच्यमध्यवस्येत् । जातिशब्दश्चायं वृद्धव्यवहारेऽवस्थितो यत्र प्रसिद्धस्तत्रान्यत्र च । तथा च ‘ कुशलोदारशब्दादेर्यौगस्त्वनुगमस्थितः । न तावत्येव शब्दार्थप्रसिद्धिर्व्यवतिष्ठते ॥ अश्वकर्णाजकर्णादौ समासानुगमे सति । अपेतावयवार्थोऽर्थो दृश्यते वृत्तशब्दवत् ॥ एवं राजन्यशब्दादेरयतत्वायनादर: । व्याक्रियाविपरीतोऽपि स्थितो लोकप्रसिद्धित. ॥ तथा वेदविरुद्धेऽर्थे दृष्टं शब्दानुशासनम् । तत्तथा यदि गृह्येत वेदाङ्गत्वं विरुध्यते ॥ ’ ‘ कल्येऽण्’ ( पा. ४।२।८ ) ‘ वामदेवाड्ड्यड्ड्यौ ’ ( पा. ४।२।९ ) इति कलिवामदेवदृष्टसामाभिधानप्रतिपत्तिः वैयाकरणस्य [ पृ. २६७ ] भवति । वेदे तु ‘ततो यत् वाम समभवत् तस्माद्वामदेव्यम् ’ ‘ यद् कालयत्तत्कालेयस्य कालेयत्वम् ’ इत्यादार्थ तु पत्तिदर्शनं व्याकरणानुसारिणी प्रतिपत्ति बाधते । तथा कल्पसूत्रकारै. ‘ कृष्णाय वास: कृष्णतर्द्ये अजिने ’ इत्येवमादिषु कृष्णद्रव्यादिविषयत्वव्यवस्थापकशब्दात्तेनाध्ययनगता अथा वेदार्थविवरणमशक्ता वेदवाक्यप्रोक्तार्थानां वृत्तयूषादि शब्दार्थाश्च व्याख्यायन्ते । यथा चैवमादिषु व्याकरणानपेक्षाण्येव निःसंशयार्थप्रतिपत्तिमात्रा स्थूलपृषत्यादि शब्दार्थेष्वपि व्याकरणानुसरणेन निर्णयक्रमेति न व्याकरणमपेक्षितव्यम् । किंच ‘ वाक्यार्थेषु च संदेहा जायन्ते ये महत्तरा. । नैषां व्याकरणात्कश्चित्पूर्वपक्षोऽपि गम्यते ॥ ’

यदि संदेहसंदेहप्रयोजनं व्याकरणं भवेत् तत. क्रियमाणा: स्वरा अविदर्थं प्रतिपादयन्त्येव विधि दोषभूता. । तथा त्रिमूर्गशोषणमौदुम्बरत्वस्य फलमुत प्रशंसार्थमुपात्तमिति । तथा हेतुविधिहेत्वर्थवादमन्त्रप्रयोगदृष्टादृष्टार्थत्वादिषु ग्रहैकत्वविवक्षादिषु च संदेहानपनयेत् । अथैवमादिषु मीमांसासिद्धत्वाद्व्याकरणेऽनुपन्यासस्तत्र कल्पसूत्रकारवचनसिद्धकतिपयस्थूलपृषत्यार्थनिर्णयप्रयोजनता पुनरा नाऽऽश्रयणीया । अपि च ‘लक्षणोत्थेऽपि संदेहे व्याख्यानादेव निर्णय: ॥ वेदशब्देष्वपि व्याख्या नैव दण्डैर्निवार्यते ॥ ’ ‘व्याख्यानतो विशेषप्रतिपत्तिः’ (महाभाष्ये प्रत्याहाराह्निके लण्सूत्रे ) इत्यनयैव परिभाषया न हि संदेहादलक्षणमिति तत्र हि संदेहादवेद इत्यपि शक्यं वक्तुम् । ‘ न चागृहीतशब्दार्थै. कैश्चिद्व्याकरणाश्रयात् । व्याख्यातु शक्यते वेदो यत: स्यात्तेन निश्चय: ॥ यथैवावस्थितो वेदस्तथा व्याख्याऽपि सर्वदा । अत: स्थूलपृषत्यादिव्याख्या व्याकरणादृते ॥ न च लोके प्रयुक्तानां पदानां दृश्यते स्वर: । व्यवहाराद्बहिर्भूतात्स्वरात्तावोऽर्थनिश्चय: ॥ ’

वृद्धव्यवहाराधीनं शब्दार्थावधारणं तत्र च समासान्तोदात्तत्वपूर्वपदप्रकृतिस्वरत्वादिप्रयोगविभागाभावात् न तत्कृतोऽर्थविशेषव्यवस्था । ‘ यत्र स्वरित स्वरज्ञानं वेदवाक्येष्वपि श्रुतम् । तत्र नैव पदार्थानामवधारणसंभव: ॥ [ पृ. २६८ ] तत्रापि निर्णयो य: स्यादर्थप्रकरणादिभि. । तत्र तैरेव सिद्धत्वान्न स्वरस्याभिधाङ्गता ॥ तेनादृष्टार्थ एवायं स्वरपाठोऽवगम्यते । सर्वदा ब्रह्मयज्ञाङ्गद्रव्ययज्ञजपेषु च ॥ ’

व्याकरणानुगमोऽपि चास्य यदि नाम कथंचित्तत्प्रयोगार्थं एव भवेत्त तु लौकिकप्रयोगार्थः । अत्यन्ताप्रयुक्तत्वात् ।

‘ न च व्याकरणोक्तेन स्वरेणार्थस्य निर्णय: । शब्दानुशासनं ह्येतद्दृष्टं नार्थानुशासनम् ॥ ’ तस्मात् असंदेहार्थमपि नाध्येयं व्याकरणम् । ॥ ह्येतदर्थनिश्चयाद्भूतस्वरविशेषप्रयोगोपरक्तिशास्त्रम् । यान्यपि च ‘ इमानि भूय शब्दानुशासनस्य प्रयोजनानि ’ इत्येवमुक्तान्यन्यानि तेषामपि कानिचित्प्रयोजनत्वेनोक्तान्येव न संभवन्ति, कानिचित्प्रयोजनाभासानि, कानिचिदप्रमाण-

क्षणाच्च स्यात्क्षणान्तरे । तादृशस्य च संस्कारो न शक्यो नोपयुज्यते ॥ तस्मादनियमं मुक्त्वा नित्यः संस्क्रियते यदि । विक्रियाख्योऽपि संस्कारस्ततो नैवास्य संभवेत् ॥ विना व्याकरणाद्व्याप्तिः सिद्धा श्रोत्रसमाश्रया । अदृष्टार्थस्तु संस्कारो विध्यभावान्न गम्यते ॥ [ पृ. २७२ ] दृष्टार्थेषु च शब्देषु नादृष्टेन प्रयोजनम् । न हीदं भोजनार्थानां व्रीहीणां प्रोक्षणात्फलम् ॥ कर्मप्रकरणाम्नाता न च व्याकरणक्रिया । येनापूर्वप्रयुक्तानां शब्दानां संस्कृतिर्भवेत् ॥ हन्त्यादिविधियत्नापि संभवी व्याक्रियाविधिः । पौरुषेयं कथं वस्तु विदध्याच्छास्त्रतो विधि. ॥ तेनानारभ्यवादेऽपि विधिर्नैवास्ति तादृश. । अनारभ्य विधित्वे च न कर्मार्थत्वसंभवः ॥ ऐकान्तिकं हि संस्कार्यं यत्कृतौ स्यात्सुरादिवत् । तद्द्वारेण क्रतुप्राप्तिर्न लोकव्यभिचारिणः ॥ लोकवेदगतत्वाच्च शब्दानां व्यभिचारिता । अतो न व्याक्रिया गच्छेत्तदुपस्थापितं क्रतुम् ॥ आकाशेऽवस्थितः शब्दः संस्कर्तुं शक्यते कथम् । नित्यत्वान्मूर्त्यभावाच्च व्योमाश्रितविभुत्ववत् ॥ वर्णसंस्कारमात्रं च यदि व्याकरणाद्भवेत् । प्रत्याहारेण तत्सिद्धेर्नोत्तरेण प्रयोजनम् ॥ समुदायस्त्ववस्तुत्वान्नैव संस्कारमर्हति । प्रत्येकं च भवेद्दूरद्भिवर्गः प्रतीष्टकम् ॥ न च स्वतन्त्रारम्भो वर्णैः शब्दस्य कस्यचित् । येन तत्संस्कृतिः सिध्येत्स हि पूर्वं निराकृतः । स्फोटगोशब्दसास्नादिप्रभृतौ पदकल्पना । गकारादिपदव्याख्याद्वारेणैव निराकृता ॥ सर्ववर्णसमूहोऽपि न संस्कार्यः कथंचन । न तस्यार्थप्रयुक्तत्वमस्ति ह्यनभिधानतः ॥ अथ त्रिचतुरा वर्णाः संस्क्रियन्ते पदे पदे । संख्यामात्रस्य साधुत्वं तथ स्यादितरेष्वपि ॥ संस्क्रियेतानुपूर्वी चेच्छब्दधर्मो न सेष्यते । ग्रहणोच्चारणत्वाद्धान्यादिषु च संभवात् ॥ ग्रहणोच्चारणे एव संस्कार्ये यदि मन्यसे । कर्मण. कर्मसाध्यत्वमुपरिष्टान्निषेत्स्यते ॥'

[ पृ. २७३ ] वक्ष्यति हि– ' कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ' ( ३।१।१०।१९ ) इति । ' ताल्वादिश्रोत्रसंस्कारो न च व्याकरणाद्भवेत् । वेदोपदिष्टसंस्कारसंस्कार्यत्वावधारणात् ॥ मनो वा पुरुषो वाऽथ संस्कारास्पदमिष्यते । शब्दानुशासनं शास्त्रमिति व्यर्थं तदा भवेत् ॥ शिष्यानुशासनत्वं हि शास्त्राणामुपपद्यते । शब्दस्यानुशास्यत्वाद्व्यर्थं तदनुशासनम् ॥ स्फोटशब्दे च संस्कारः सुतरां नोपपद्यते । असन्तौ तत्र हि स्यातां प्रकृतिप्रत्ययावपि ॥ वाक्यस्फोटश्च यैरिष्टः सर्वावयववर्जितः । नामाख्यातादि ( आदिशब्देन निपातोपसर्गयोः परिग्रहः ) संस्कार्यं तेषां शशविषाणवत् ॥ अपोद्धारेण संस्कारो यथत्राभ्युपगम्यते । शृङ्गं गवादपोद्धृत्य किं न संस्क्रियते मनाक् ॥ अन्यायत्वसमारूप्यादपोद्धारो यदीष्यते । गवशृङ्गेण सारूप्याच्छशशृङ्गस्य किं न सः ॥ गवयादिषु नाम्नानां सादृश्यं यन्निदर्शितम् । सत्यावयवसामान्याद्यदिहापीष्यते तथा ॥ वाक्याधिकरणे चैतद्विस्तरेण निराकृतम् । तेनापोद्धारसंस्कारकल्पनाऽपि न युज्यते ॥ अन्वाचक्षीत शास्त्रं चेच्छब्दानसदपोद्धृतान् । एतेनैवाप्रमाणत्वमस्य माहेन्द्रजालवत् ॥ अशिष्यत्वादशास्त्रत्वमेवं तावत्पदं प्रति । वाक्यानुशासनं नैव कृतं व्याकरणेन च ॥ अर्थेन च प्रयुक्तानां शब्दानां संस्क्रियोदिता । वाक्यमेवंविधं चेष्टं न पदान्यर्थवर्जनात् ॥ ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले । देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥ '

इति भट्टपादप्रमुखैः केवलस्य चाप्रयोगादर्थप्रयुक्तत्वं निराकृत्य वाक्यान्वाख्यानार्थत्वेन व्याकरणस्य व्याख्यानं यत्कृतमासीत् तदनाश्रयणात्तु सूत्रवार्तिकभाष्यकारैरेव [पृ. २७४] पूर्वापरविरुद्धमभिदधानैष्टीकाकारैरपि सुतरां व्याकरणस्य अप्रत्ययितपुरुषप्रणीतत्वं दर्शितम् । ' अतो निर्गानभूयिष्ठाद्विरुद्धान्मूलवर्जितात् । निष्फलाच्च व्याख्यानं शब्दानां नानुशासनात् ॥ ' ततश्च–

'स्वाध्यायाध्ययनं मुक्त्वा तत्प्रयोगश्च कर्मसु । शेषशब्दप्रयोगेषु न व्यवस्थोपयुज्यते ॥' तेन सर्वैर्भाषितव्यं सर्वं साधु इति । अत्रानुमानप्रयोगाः– 'गावीगोण्यादयः शब्दाः सर्वे गोत्वस्य वाचकाः । वृद्धैस्तत्र प्रयुक्तत्वाद्गौरित्येवमादिवत् ॥ एवं साधुत्वमेतेषां सर्वेषामर्थसाधनात् । श्रोत्रत्वा चापशब्दत्वं पूर्वदृष्टान्तदर्शनात् ॥ अनादित्वं च सर्वेषामप्यनवधारणात् । वक्तुर्वक्तुः पुरो वृत्तेः शक्यं वक्तुं गवादिवत् ॥ साधुभिर्भाषमाणानां नादृष्टफलसंभवः । दृष्टार्थत्वाद्यथा धूमादग्निं देशेऽवगच्छताम् ॥ अशास्त्रविहितत्वाच्च वृद्धशब्दाभिधानवत् । शास्त्रं नावेदरूपत्वात्सांख्य-ख्यानित्यादिवत् ॥ वेदमूलतयाऽप्यस्य प्रमाणत्वं न कल्पते । अनेदविषयार्थत्वान्नाटकादिनिबन्धवत् ॥ शास्त्राङ्गमपि नैवैतद्वतादर्थ्यात्कथादिवत् । अतादर्थ्यं विनाऽप्यस्माद्वेदेनार्थावशोधनात् ॥ न च शब्दप्रयोगाङ्गं सिद्धे तस्मिन्प्रवर्तनात् । यदीदृशमनङ्गं तद्दृष्टं नेत्रानुमानवत् ॥' यथा हि चक्षुरादिग्रहणानपेक्षरूपादिविज्ञानसिद्धौ तदनितार्थापत्तिप्रभवं चक्षुराद्यनुमानमुत्पन्नमपि न पूर्वज्ञानस्याङ्गमेवं लोकेनैवसिद्धशब्दप्रयोगोत्तरकालप्रणीततया व्याकरणमप्यनङ्गम् । 'तस्मात्पर्यायशब्दत्वाद्गाव्यादेस्तरुवृक्षवत् । आचारेण प्रयोज्यत्वं न शास्त्रार्थनिवारितम् ॥'

शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् । २५ ॥

भाष्यम्—महता प्रयत्नेन शब्दमुच्चारन्ति– वायुर्नाभेरुत्थितः, उरसि विस्तीर्णः, कण्ठे विवर्तितः, मूर्धानमाहत्य परावृत्तः, वक्त्रे विचरन् विविधान् शब्दानभिव्यनक्ति । तत्र अपराध्येतापि उच्चारयिता । यथा शुष्के पतिष्यामीति कर्दमे पतति, सकृदुपस्पर्शयामीति द्विस्त्रिः स्पृशति । ततोऽपराधात् प्रवृत्ता गाव्यादयो भवेयुर्न नियोगतोऽविच्छिन्नपारम्पर्या एवेति ।

वा—एवं प्राप्ते अभिधीयते– 'अनैकान्तिकता तावदर्थापत्तेरिहोच्यते । अन्यथाऽप्युपपन्नत्वात्प्रयोगार्थावबोधयोः ॥ पापकल्पादनं यत्तु न कथंचित्प्रयुज्यते । प्रयोगप्रत्ययायत्ता तत्र वाचकता ध्रुवम् ॥ संशयप्रतिबद्धे च पूर्वपक्षार्थनिर्णये । इष्टार्थनिश्चयः शक्यः सुखं सिद्धान्तहेतुना ॥' दृढविपर्ययज्ञानानन्तरं सहसैव च सम्यग्ज्ञानोत्पादातिभारादस्यैकदेशावतारणार्थं संशयोत्पादनामात्रमेव तावदुक्तम् । अथवा– 'संसिद्धव्यवहारत्वादनादित्वं यदाश्रितम् । अपराधप्रसङ्गेन तत्रैषा संशयक्रिया ॥' यदि ह्येकान्तेन यादृशः परस्मात्शब्दः श्रूयते तादृगेव सर्वेण सर्वदोच्चार्येत ततो वृद्धव्यवहारपरम्परायां सत्यां गवादिभिरिव न गाव्यादिभिः कश्चिदपि कालः शून्य आसीदित्यव्यवस्थायादनादित्वमङ्गीक्रियेत । अपराधस्य शब्दस्य संभवात्तु तदाशङ्कायां सत्यां नैकान्ततः सर्वेषामनादित्वम् । प्रयत्ननिष्पत्तेरिति पूर्वोक्तन्यायावधारितप्रयत्नाभिव्यक्तिरेव हेतुत्वेनोपदिश्यते । अपर आह । अप्रयत्ननिष्पत्तेरपराधस्य भागितेति । यो ह्यस्खलितप्रयत्नः शब्दमभिव्यनक्ति तस्य परम्परागतशब्दोच्चारणमानास्सर्वे समानविधाना भवेयुः । यदा त्वप्रयत्ननिष्पत्तिरपि शब्दे संभाव्यते तदा तत्रापराधकृतरूपान्तरापत्तिप्रसङ्गाच्च नियोगतः सर्वशब्दानां समानविधानत्वम् । अथवा शब्दविषयस्य प्रयत्नस्यैव या निष्पत्तिस्तस्यामपराधः सुनिपुणानामप्यविकलकरणानां दृश्यते किमुताऽनिपुणविगुणकरणानाम्– 'यश्च प्रयत्ननिष्पत्तावपराधः कृतास्पदः । शब्दे स तदभिव्यङ्ग्ये प्रसङ्गेन धार्यते ॥ अतश्चानपराधेन व्यज्यमानेषु साधुता । सापराधेऽन्वसाधुत्वं व्यवस्थेयं च तद्वशा ॥' लोकेऽपि च– 'अविनष्टे विनष्टे च दृश्येते साध्वसाधुने । तथा सति च तद्द्वारा सिद्धिः शब्दापशब्दयोः ॥ यद्वा सत्यत्वमेवेह साधुत्वमभिधीयते । असत्यत्वमसाधुत्वं धर्माधर्मोपयोगवत् ॥ धर्माधर्मव्यवस्था हि सत्यानृतनिबन्धना । विहितप्रतिषिद्धत्वात्तयोश्चेष्टा समाश्रिता ॥ अर्थमत्र यथा वाच्यं शब्दसत्यं तथैव हि । शब्दानृतं च हातव्यमर्थानृतवदेव नः ॥ एवं सति व्यवस्थाने भक्ष्याभक्ष्यविभागवत् । प्रयोगोत्पत्त्यशास्त्रत्वादिति हेतोरसिद्धता ॥' अथवा यदु-

त्तम् ' साधोर्नित्यप्रसक्तत्वादसाधोरप्रसङ्गत । न धर्मनियमोऽस्तीति तत्रेदमभिधीयते ॥ अपराधस्य भागित्वादुभयं सावकाशकम् । साधोरनियता प्राप्तिरसाधोश्च प्रयोज्यता ॥ ' यदि हि साधुः प्रयुज्यमानो न कश्चित् कदाचिदपि विनश्येत्ततस्तस्य नित्यप्राप्तत्वात् नियत्योपशब्दप्राप्तेश्च नियमशास्त्रमनर्थकं भवेत् । यदा तु अपराधभागित्वे सति द्वयोरप्यनियता प्राप्तिस्तदा साधुनियमकारिणः शास्त्रस्य न विषयाभावः । एक एवायं शब्दः पुरुषाशक्तिप्रमादकारणादिभेदाच्चा ता वर्णन्यूनातिरेकान्यत्वाज्जयस्यानुपपत्तत्वेन तेन अपभ्रंशरूपेण गृह्यमाणः तमेवार्थं प्रतिपादयतीति न पर्यायकल्पनया वाचकशब्दान्तरत्वैकान्तसिद्धिः । किंच, ' देवदत्तादिनामानि नि सन्दिग्धानि यानि च । यानैस्तत्तादिरूपेण नाश्यन्ते तैश्च संशय ॥ ' तत्तादिशब्दादपि हि बालप्रयुक्तात् तदनुकारिकठोरबुद्धिप्रयुक्ताद्वा देवदत्तार्थमन्यमनुपलभमानः कथमिव प्रयोग-प्रत्ययदर्शनाभ्यामेव वाचकत्वमध्यवस्येत् । ' अपभ्रंशाश्च ये केचिद्रूढा गाव्यादयो जने । तेऽपि गाव्यादिरूपेण नाश्यन्ते व्यभिचारिता ॥ ' कतिपुचिदेव गाव्यादिषु चिरापभ्रष्टत्वाद्रूढ्याशङ्कया साधुत्वभ्रान्तिर्भवेत् । ये तु तत्क्षणमेव अशक्तिप्रमादज्ञानकरणैः भिन्नगाव्यादिरूपेण विनाश्यमानाः प्रयुज्यमानाः प्रकृत्यनुसरणद्वारेण या अर्थं प्रत्याययन्त उपलभ्यन्ते, तेष्वपि प्रयोगप्रत्ययदर्शनमस्तीत्यनैकान्तिकता । ' ततश्च त्वत्प्रयुक्तोऽयं हेतुरप्यपराधभाक् । अनैकान्तिकतादोषात्र ह्यसौ साधनक्षमः ॥ अन्यथोच्चार्यमाणश्च शब्दोऽपभ्रश्यते यथा । तथा हेतुरनैकान्ताद्धेत्वाभासत्वमृच्छति ॥ तस्माद्दृष्टप्रयोगेऽपि पुनरस्ति विचारणा । वाचकोऽयं न चेत्येवं सति चाऽन्येन निर्णयः ॥ '

अन्याय्यश्चानेकशब्दत्वम् । २६ ॥

भाष्यम्—— न चैष न्यायो यत्तद्दशा शब्दा एक-मर्थमभिनिविशमानाः, सर्वेऽविच्छिन्नपारम्पर्या एवेति । प्रत्ययमात्रदर्शनात् अभ्युपगम्यते साधुत्वमसाधुशब्दे-ऽप्यवगते प्रत्ययोऽवकल्प्यते । तस्माद्येषामेकोऽनादि-रन्येऽपभ्रंशाः । हस्त कर. पाणिरित्येवमादिषु त्वभि-युक्तोपदेशादनादिरभीधामर्थेन सम्बन्ध इति ।

वा—— प्रत्ययापादनात्परपक्षे जितेऽपि स्वपक्षसिद्धि-र्दुर्लभैवेत्येवमर्थमुत्तरसूत्रम्-- ' अन्याय्यश्चानेकशब्दत्वम् ' इति । कथं पुनरिदमन्याय्यम् । तदुच्यते— ' वाच्य-वाचकसामर्थ्यनियमो योऽभिधानस्य । स नश्य-त्यनेकत्वे स्वरूपात्सोऽपि हीयते ॥ ' एकात्म-कयोरेव हि वाच्यवाचकयो अन्योन्याक्षेपात्परस्परनियम सम्भवति अन्यतरस्यापि त्वनेकत्वे सति व्यभिचारात् नियमहानि । किंच— ' सामर्थ्यं सर्वभावानामर्था-पत्त्याऽवगम्यते । एकसामर्थ्यसिद्धेऽर्थे नानेक तत्र लभ्यते ॥ ' अर्थतादृशा हि वाच्यप्रत्ययान्यथा-नुपपत्तिमात्रप्रमाणिका वाचकशक्तिरेकैनैव कल्पिता तद-नुसारेणापभ्रंशेऽपि चेदनुगम्यते को नाम तन्निरपेक्षवाच-कशक्त्यन्तरकल्पना लभेत । ' नाम च व्यवहारार्थ-मर्थस्याभ्युपगम्यते । तेनैकेनैव सिद्धेऽर्थे द्वितीयादि च निष्फलम् ॥ ' किंच- ' विकल्पस्याष्ट-दोषत्व पुरस्तादेव वर्णितम् । स चेहानेकशब्दत्वे निश्चयेन प्रसज्यते ॥ नामान्तरे श्रुते चार्थः स्वार्थान्नोऽन्य प्रतीयते । सञ्ज्ञा चोत्पत्तिसंयोगात् ' इत्यनेतद्धि दृश्यते ॥ या तु हस्त कर पाणिरित्यनानेकशब्दता । अनन्यगतिकत्वेन सा द्रष्टव्याणेन च ॥ एकशक्त्यनुसारेण यान्यपस्ति गति कश्चित् । उपमानानुमानाभ्यां तावत्सैवानु-गम्यते ॥ तस्मात्स्वरूपसम्बन्धशब्दार्थत्वनिरूपणे । एकैकनियमादेव गति सामान्यगोचरा ॥ ' यथा च प्रकृतिशाखस्पद्वारेण अपभ्रंशाः प्राकृतीमेव शक्तिमाविर्भावयन्तोऽर्थप्रतिपत्त्युपयोगं गच्छन्ति तथा ' तदशक्तिश्चानुरूपत्वात् ' ( १।३।८।२८ ) इत्यत्र वर्णयिष्यते । ' तेनानेकप्रयोगेऽपि कश्चिदेवार्थ-सङ्गत । तदुपस्थापनेनान्ये बोधकास्तद-शक्तिजा ॥ '

तत्र तत्त्वमभियोगविशेषात् स्यात् । २७ ॥

भाष्यम्—— कथ पुनस्तत्र तत्त्वं शक्यं विज्ञातुम् ? शक्यमित्याह । अर्थिनो ह्यभियुक्ता भवन्ति । दृश्यते

चाभियुक्तानां शुश्रूषता अविस्मरणमुपपन्नम् । प्रत्यक्षं चैतद् शुश्रूषमाणैः श्रूयते इति । तस्मात् यमभियुक्ता उपदिशन्त्येष एव साधुरिति, साधुरित्यवगन्तव्यः ।

या— [ पृ. २७८ ] तुल्यप्रयोगप्रतिपत्तीनामन्यतरावधारणमशक्यमिति चेत्, अत आह— 'तत्र तत्त्वमभियोगविशेषात्स्यात्' इति । कः पुनरभियोगः ? को वा तद्विशेषः ? कथं वा तेन वाचकत्वनिरूपणमिति । तदुच्यते—' लक्षणश्रवणाभ्यासादभियोगः प्रवर्तते । तेन लक्ष्यान्तरज्ञानं तद्विशेषोऽभिधीयते ॥ ' प्रतिपदपाठो ह्यानन्त्यादत्यन्ताशक्यस्तदभावे च लक्षणानुसरणमेवैकं शब्दान्वयनिरूपणक्षमत्वेन अवधार्यते । ' तस्माच्च लोकवेदाभ्यां कश्चिद्व्याकरणादृते । वाचकानपभ्रष्टान् यथावज्ज्ञातुमर्हति ॥ तत्सामस्त्यापरिज्ञाने पारिशेष्यानिरूपणात् । अर्थोपत्त्याऽपशब्दानां निश्चयो नोपपद्यते ॥ लक्षणानुगमाद्यास्तु बहिरेव प्रयुञ्जते । नियतप्रतिपक्षत्वात्तेष्वर्थापत्तिसंभवः ॥ ' [ पृ. २७९ ] तेनोभयज्ञानस्य अपि व्याकरणमेवोपाय इति तद्गताभियोगविशेषाश्रयणम् । यत्तु प्रयोगोत्पत्तिशास्त्रत्वादिति लक्षणे तन्मूलत्वमनादित्वेतरेतराश्रयत्वमुक्तं तल्लोकव्यवहारप्रसिद्धप्रतिपादकत्वमात्रेण अनिर्णीतपारमार्थिकवाचकत्वेऽपि व्याकरणात्परभूते पदे केषांचित्साधुत्वमवाप्याय पुनस्तेष्वन्याभ्यापकत्वात्साधुत्वनिर्णयात्परिहरिष्यते । 'यदि वाचकतानाशो न स्याद्व्याकरणादृते । न विज्ञायेत वा तत्र भवेदन्योन्यसंश्रयः ॥ निर्ज्ञाते वाचकत्वेऽपि तदपभ्रंशसंकरात् । विवेकप्रतिपत्त्यर्थमिष्टा च व्याक्रिया स्मृतिः ॥ ' तेन संकीर्णसंकीर्णवाचकज्ञानोपायत्वाल्लोके व्याकरणस्याभ्यवधिविषयत्वे-नाधुनातनत्वम्, वेदे साधुशब्दमात्रदर्शनादनर्थकं व्याकरणमिति चेत् । न । अव्याप्तविषयत्वात् । ' ये चैव प्रस्थिता एव साधवो लोकवेदयोः । सर्वशाखागतान् विद्यात्को वा साधारणानपि ॥ ' यथैव लौकिकप्रसिद्धपदपाठस्यानवधारण एव वेदेऽपि सर्वशाखागतान् सर्वदा आनुपूर्व्येण किमुत अध्येतुम् ' ' प्रकृतिप्रत्ययानन्त्यादागमस्य पदराशय । लक्षणेनानुगम्यन्ते कस्तानध्येतुमर्हति ॥ ' एतेन पुरुषार्थक्रत्वर्थोद्दिष्टसाधुशब्दप्रयोगज्ञानसाध्यसाधनभावविधिवाक्यगतपदव्याक्रिया तस्याश्च पूर्वप्रसिद्धतन्मूलत्वकल्पनागतेतरेतराश्रयत्वप्रसङ्गः प्रत्युक्तः । यदि ह्येकान्तेन ' तस्मान्न ब्राह्मणेन म्लेच्छितवै ' ' एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति ' ' तस्मादेषा व्याकृता वागुद्यते ' ( तैत्ति. ६।४।७ ) इति चैवमादिक्रतुपुरुषगतनियमविधिदर्शनोत्तरकालमेव व्याकरणेन प्रवर्तितं यमिति पौर्वापर्यव्यवस्था भवेत्तत एव पर्यनुयोगः । प्रमाण्येतापि व्याकृतत्वाश्रयो वेदविधिर्वेदनित्यत्वाश्रय च व्याकरणं कथमनवकल्पिष्यते इति । यदा तु किंचिद्ग्रन्थोपनिबद्धप्रकृतिप्रत्ययादिविभागद्वारप्रक्रियात्मकव्याकरणस्मृतिवर्जितकालाभावात् अन्वाख्यानान्वाख्येयान्वाख्यातविधिप्रयोगानन्वाख्यातप्रतिषेधवर्जनपक्षस्यापि अवगम्यमानवेदविधिमूलत्वात् अनादित्वे सति सर्वेषां वेदवेदियूपाहवनीयाध्वर्युगोदोहनादिस्वरूपतत्कार्यतत्साधनविधीनामिव सर्वदाऽनवगतपूर्वापरविभागसंबन्धे [ पृ २८० ] अत्यन्तादृष्टार्थत्वमेव केवलशास्त्रप्रत्ययाधीनम्, तदा सर्वकालव्याक्रियमाणविद्यमानशब्दनियमविधेर्न किंचिदनुपपन्नम् । यत्तु वाचकत्वावाचकत्वव्यतिरिक्तसाध्वसाधुताभावात् वाचकावाचकत्वयोश्च लौकिकप्रयोगप्रतिपत्तितद्विपर्ययमात्रशरणत्वात् गाव्यादिशब्दानामवाचकत्वप्रतिज्ञाने लोकविरोधात् मेर्वादिशब्दमातृकाक्षरपाठप्रसिद्धन्यूनातिरिक्तविपर्यस्तवर्णपदव्यतिरिक्तप्रसिद्धमध्ये कश्चिदपशब्दो नामास्तीति । तत्राभिधीयते— ' समुग्धवाचके लोके लक्षणाद्वाचकः स्फुटः । गम्यते स्मरणं चोक्तमाचाराद्बलवत्तरम् ॥ ' लोकव्याकरणाभ्यां हि मिश्राभ्यामविप्लुतवाचकसिद्धिरिति तावदेव लोकव्यवहारात् वाचकत्वज्ञानं जायते यावत् व्याकरणानुगतत्वं नाभ्युपगम्यते । यदा तु तयोर्मार्गभेदेन प्रतिपत्तिस्तदा ' तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ' ( १।३।४।८ ) इत्युपन्यस्य शास्त्रस्था वा तन्निमित्तत्वात् इत्यनेनोत्तरेण व्याकरणाभ्यासाभियोगप्रतिपत्तिसंनीयस्त्वं तदभियुक्तपुरुषनिर्णीयस्त्वं वा पूर्वमेव स्थापितम् । ' तर्केणा-

न्तरस्यापि अपरवृद्धव्यवहारान्तरदर्शनमेवेत्यनादिवृद्धव्यवहाररूपलिङ्गपरम्परा परिकल्प्य लोके व्युत्पद्यते । तथा स्मृतिपरम्परामनादिमेव कल्पयित्वा शास्त्रानुमानमपि कुर्वन्ति । न चानुमितस्य शास्त्रस्यार्थप्रतिपादकत्वमनुपपन्नम् । लिप्यनुमितवत् । सर्वदा च तस्याश्रवणमनाम्नातत्वात् । अनाम्नानमेव कस्मादिति चेत् । आचार्यैरनाम्नानात् । तदपि कथमिति चेत् । आचार्यान्तरैरनाम्नातत्वादिति न दोषः । न च तस्याप्रत्यक्षत्वम् । वर्णात्मकत्वात् । प्रत्येकं च वर्णानां श्रोत्रेन्द्रियग्राह्यत्वात् । वेदत्वं च तस्यापौरुषेयवाक्यरूपत्वात् तन्मात्रवर्तित्वाच्च वेदशब्दस्य । तस्मादनुमेयमपि शास्त्रमस्ति ।

प्रत्यक्षमपि शास्त्रं किंचिदध्याहारापेक्षं पिण्डपितृयज्ञादिशास्त्रं वैदिकशास्त्रं च । पिण्डपितृयज्ञादौ हि नियोज्यपदाश्रवणादपरिपूर्णं वाक्यम् । ननु पदानामन्विताभिधायित्वेन व्युत्पत्तेर्भवत्येकपदप्रयोगेऽन्वितार्थान्तरापेक्षत्वात् अन्विताभिधानस्य तदसिद्धावपरिपूर्णता । अनेकपदप्रयोगे तु अन्विताभिधानस्य सिद्धत्वात् किंनिबन्धनापरिपूर्णत्वम् । उच्यते । अनाप्यभिहितार्थस्यानुपपत्त्या भवत्येवापरिपूर्णता । अत्रापि लिङादिभिरपूर्वं कार्यरूपमभिधीयते । न चानुष्ठानमन्तरेण कार्यरूपता निर्वहति, न च कर्तारमन्तरेणानुष्ठानोपपत्तिः । न च अधिकारं अप्रतीत्य कर्मणि कर्तृता प्रतिपद्यते । कर्मणि चाधिकारो नियोगे नियोज्यस्य अवगम्यते । यो हि ममेदं कार्यमिति प्रतिपद्यते स स्वकीयकार्यसाधनं कर्म स्वार्थतया प्रतिपद्यमानोऽधिकारी स्यादिति नियोज्याश्रवणेऽपि कार्यत्वानिर्वाहादनुपपद्यमानपरिपूर्णत्वम् । अतो लोके अपरिपूर्णवाक्यपरिपूरकतया शब्दस्येवाध्याहारो वेदेऽपि आश्रीयते । कः पुनरयमध्याहारो नाम । अविद्यमानस्य बुद्धौ निवेशनम् । बुद्धौ संनिहिते श्रूयमाणः शब्दः स्वार्थमन्वितमभिधत्ते । तस्य च विशेषाश्रवणे योग्यता लाघवं च कारणम् । तथाहि । यद्यपि जीवनमन्तरेण नित्यं च तथापि तस्मिन्नियोज्यविशेषणे समाश्रीयमाणे विधेरपरमनुष्ठानाक्षेपकत्वं कल्पनीयं स्यात् । अपेक्षितेऽधिकारिविशेषणे तदर्थितयैव प्रवर्तने प्रवृत्तेर्विधेरनुष्ठानाक्षेपकत्वकल्पना न कर्तव्या । यद्यपि चोत्पन्नदुरितक्षयोऽपि पुरुषैरिष्यते तथापि तस्योपात्तदुरितक्षयसापेक्षत्वाद्गौरवम् । तस्मात्सकलपुरुषाभिलषणीयं सकलदुःखसंभेदरहितं सुखं स्वर्गपदाभिधेयं नियोज्यविशेषणं कल्प्यते । कथं पुनः तादृशसुखवाचकता स्वर्गशब्दस्यावसीयते । उच्यते । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येवमादिसमाम्नाये सकलदुःखसंभेदरहिताभिलाषोपनीतदीर्घतरसुखसाधनत्वे नार्थवादैः स्तूयमानं कर्म दृश्यते । स्वर्गशब्दोऽपि लोके कस्मिंश्चिदर्थे श्रौत्या वृत्त्या प्रयुज्यमानो दृश्यते । योऽयमस्य चन्दनादौ प्रयोगः सोऽपि प्रीत्युपगमे तत्रैव प्रयोगात् प्रीतिसाधनत्वावगमनेऽपि प्रीतेरपि वाच्यत्वावगमात् प्रीतिमात्रवाचकस्य तत्साधने लक्षणया अपि प्रयोगोपपत्तेर्लाक्षणिक एव । तत्र यदि निष्कृष्टेनावगतः स्वर्गशब्दः तथा सुखे वर्तते तदोऽर्थवादानां मुख्यैव वृत्तिः । सुखमपि स्यादिति तादृशसुखवाचकता स्वर्गपदस्याश्रीयते, चन्दनादिष्वपि यो लाक्षणिकः प्रयोगः, सोऽपि प्रकृतार्थः । सुखस्य तत्र तद्विधसुखसाधनत्वापादनेनैवोपपत्तेः । तथा च यावत्तावत्सुखसाधने स्वर्गशब्दं न प्रयुञ्जते किन्तु सातिशयप्रीतिजनके । स्वर्गपदाभिधेयसुखसंभवे चोक्तेन न्यायेनाम्नाय एव प्रमाणं तदन्यथानुपपत्त्या च तदुपभोगयोग्यदेहदेशसद्भावोऽपि नानुपपन्नः । सामान्यतोदृष्टानुमानं तु न नियोज्यकल्पनायां प्रमाणम् । अध्यापनादौ व्यभिचारदर्शनात् । विध्यन्तरप्रयुक्तस्यानुष्ठानलाभादपरिपूर्णताऽपि नास्ति, विकृतिषु करणोपकारजनकपदार्थवर्गाणामनाम्नानात् तद्व्यतिरेकेणोपकारासंभवात् तदभावे करणस्य कार्यसाधनासमर्थत्वात् कार्यस्य कार्यत्वानिर्वाहादपरिपूर्णत्वे सति परिपूरणार्थमध्याहारः कर्तव्यः । न च तावत्तदन्यतरपदार्थाध्याहारो नोपपद्यते, विशेषावगमे कारणाभावात् । करणोपकाराध्याहारेऽपि प्रकृतिवदपरिकल्प्याध्याहारे पुनरपि पदार्थानां अभावे निर्वाहासंभवात् प्रकृतोपकाराध्याहारः कर्तव्यः । तत्रापि प्रकृतीनां बहुत्वात् चोदनालिङ्गसामान्यात् या बुद्धौ संनिधीयते तदीयोपकाराध्याहारो युक्तः । तदध्याहारे तथैवापरिपूर्णे पदार्थाकाङ्क्षायां तदुपकारोपस्थापितैः

पदार्थैरन्विताभिधानम्। यद्यपि चायमुपकारः प्रकृतो तत्पदार्थजन्यतया निर्ज्ञातः तथाप्यपूर्वप्रयुक्तत्वात् पदार्थानां प्रागुक्तापूर्वसम्बन्धस्यैव सततस्योपकारस्य ते पदार्था जनका नापूर्वान्तरसम्बन्धस्येति संप्रति पैकार्थ्ये संबन्धमुपगतः करणोपकारो न तत्पदार्थजन्यतया अवसीयते इत्यस्ति तत्रान्यपदार्थापेक्षेति पूर्वप्रतीतसम्बन्धेनोपकारेणोपस्थापितैः पदार्थैरन्वितो विध्यर्थः स्वशब्देन अभिधीयते। उपमानं तु प्रागुक्तोपकारपदार्थसंबन्धे न प्रमाणम्। सादृश्यमात्रविषयत्वात्। अतोऽध्याहारापेक्षमपि प्रत्यक्षं शास्त्रम्।

तथा प्रत्यक्षमपि शास्त्रं वचनव्यक्त्यवधारणाय लोकप्रसिद्धन्यायापेक्षम्। यावद्धि लोकप्रसिद्धन्यायानुसारेण वचनव्यक्त्यवधारणं न क्रियते न तावत् समीचीनार्थबोधोत्पादनक्षमं शास्त्रम्। तथाहि, 'उद्भिदा यजेत पशुकामः' इति किं गुणविधिः उत नामधेयमिति संदेहे न्यायाभासापादितगुणविधिनिराकरणसम्यङ्न्यायानुसारेण कृत्वा नामधेयाध्यवसानेन व्यक्तिनिर्धारणं यावन्न क्रियते तावत्समीचीनवाक्यार्थबोधो नास्तीत्यनेन मार्गेण न्यायापेक्षं शास्त्रम्। अत एव इतिकर्तव्यताभूता वेदस्य स्वार्थमवबोधयतो मीमांसा। तथा चाहुः— 'धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसा पूरयिष्यति॥' इति। कियत्पुनः पदजातमेकं शास्त्रम्। न च शक्यं वक्तुं यावता पदानामेकार्थत्वं तावदेकं शास्त्रम्। अर्थभेदे तु शास्त्रभेदो मन्त्रवत्। यथा मन्त्रेषु यावता पदजातेनैकोऽर्थः प्रतीयते तावदेकं वाक्यमित्यवगम्यते तथा शास्त्रमपीति। युक्तं मन्त्रेषु प्रमाणान्तरप्रमितार्थेषु। तत्र हि तत्त्वमन्यथात्वं वाऽर्थस्यावधारयितुं शक्यते। शास्त्रं तु प्रमाणान्तराऽप्रतीतार्थावबोधकं तदर्थस्य तत्त्वमन्यथात्वं वा शक्यते नान्यतोऽवगन्तुम्। उच्यते। शब्दानामर्थावच्छेदेनैव सर्वैकत्वोपपत्तेः। पदतोऽपि वर्णानामर्थावच्छेदेनैव। स त्वर्थोऽवच्छेदकः शास्त्रस्य शास्त्रादेवावगम्यते। कः पुनरसौ? विषयः। शास्त्रस्य च। कः पुनर्विषयो नाम? उच्यते। कार्यमेव हि नियोज्यं, कार्यं च कृतिसाध्यम्। कृतिश्च प्रयत्नः। स च सर्व एव भावार्थसम्बन्धः। तेन कार्यं प्रतीयमानं कृतिविशिष्टं प्रतीयते। नान्यथा। कृतिरपि भावार्थेन विशिष्यते। तेन भावार्थं कृतिं विशिंषन् कार्यं विशिनष्टीति विषय उच्यते। यो हि येन विशिष्यते स तस्य विषयः। अतश्च यावति पदसमुदाये विषयस्तावत्येको नियोगार्थः, तदैक्याच्चैकं शास्त्रम्। तत्र नियोगाभेदस्यापि विषयाभेदोपेक्षत्वाद् विषयाभेदादेव शास्त्रमेकं व्यवस्थाप्यते तद्भेदाच्च भिन्नम्। पञ्चधा च विषयभेदोऽवसीयते। तत्र यजति जुहोति ददातीत्यभिधानभेदाद्यागादीनां भेदोऽवगम्यते। देवतोद्देशेन द्रव्यत्यागो यागः। का पुनर्देवता? कश्चोद्देशः? कश्च त्यागः? उच्यते। स्तोत्रशस्त्रे यद्गुणवचनं यदुद्देशेन च हविषा त्यागश्चोद्यते सा देवता। तथैव याज्ञिकवृद्धानां देवताशब्दप्रयोगात्। यत्र ह्याग्नेयादिदेवतार्थानुष्ठाने प्रवृत्तोऽग्निमुद्दिश्य हविस्त्यजति तत्रैवमाहुरिमं देवतेति। उद्देशश्च चतुर्थ्यन्ततद्वाचकशब्दप्रयोगः। त्यागश्च सम्बन्धिनि स्वे औदासीन्यसंकल्पः। स चानभिसंहितपरस्वत्वापत्तिफलको यागः। देवताविशेषवाचकाद्यप्रक्षेपाधिकश्च स एव होमः। अभिसंहितपरस्वत्वापत्तिफलं च दानमिति। अभिधानभेदाद्यजत्याद्यनुबन्धभेदावगमः। तथा विध्युच्चारणात् असत्यप्यभिधानभेदे भावार्थभेदोऽवगम्यते। असन्निकृष्टार्थावबोधनस्वरसं हि सर्वमेव विध्याम्नानम्। तदर्थबोधेन एवमवसीयते नूनं भिन्ना इमे धात्वर्था इति। तद्भेदे विषयभेदाद्विषयिणो भेदोपपत्तेरसन्निकृष्टावबोधस्वभावता विध्याम्नानस्य निर्वहति। नन्वेवं तर्हि पुरुषः स्वेच्छया पुनर्विधिमामनति तदापि तर्हि विषयभेदः स्यात्। न। स्वतन्त्रत्वादुच्चारणस्य। यद्धि न पूर्वोच्चारणदर्शनपूर्वकमुच्चारणं तदपौरुषेयं स्वातन्त्र्येण परिच्छेदकम्। यत्पुनरस्वतन्त्रं तत्पौरुषेयं प्रमाणान्तरोपात्तार्थावबोधकम्। न च तत्र भेदे प्रमाणमस्तीति न भेदो विषयस्य। शाखान्तर्गतस्तर्हि विध्याम्नानाभ्यासो भेदकः स्यात्। नेत्युच्यते। अभ्यासाभावात्। यत्र ह्येक एव वक्ता पुनः पुनस्तमेवार्थमुच्चारयति तत्राभ्यासो व्यपदिश्यते। शाखान्तरगतं विधिं पुरुषान्तरं पठतीति नाभ्यासः शक्यते वक्तुम्।

 शब्दपरिच्छेदः

एवमपि पुरुषान्तराम्नानमेव कस्माद्विममर्थं न प्रतिपादयति । उच्यते । एकार्थप्रतिपादकत्वेऽपि तदाम्नानस्यासन्निकृष्टार्थत्वोपपत्तेः । तस्य हि पुरुषस्य सोऽप्यर्थोऽसन्निकृष्ट एव यद्यपि पुरुषान्तरेण प्रतीतः । एकत्वं तु कथम् । विधेयैक्यात् । तद्देवत्य चाभिधानैक्यात् । तथा वाक्यमपि तदैक्यमेव । यद्येवं तर्हि 'य एवं विद्वान् पौर्णमासीं यजते' इत्यत्रापि तद्भेदः स्यात् । न । अभ्यासकल्पस्य भेदस्यानिर्वाहात् । रूपभेदेन हि भेदो निर्वहति यागस्य हि द्रव्यदेवते रूपम् । ताभ्यां हि स रूप्यते । नैते हि ताभ्यां स भवतीति । यद्यप्यत्र द्रव्यमविहितमपि यत्किंचिदुपादाय क्रिया सिध्यति, यद्यपि चाग्नावनिरूपमपि सौत्रमार्गं द्रव्यं गम्यते तथापि देवता नाभिहिता भवतीति विधानमन्तरेण तदलाभः । न च यच्छिदेव तद्व्यक्तस्यार्थमाचक्षाणो देवता विधातुमलम् । विशेषानवगमे कारणाभावात् । नापि 'याग्नेयी अमावास्यायामनूच्येते' इति मन्त्रविधानात् मान्त्रवर्णिकदेवताश्रवणं सम्भवति । मन्त्रविधेरभावात् । आज्यभागयोरेव विधिरित्यन्यतानुरोधादिति स्थितम् । तस्मादनुवादमन्तरेण रूपालाभादनुवादोऽयमिति साम्प्रतं कर्मभेदः । नन्वेवं तर्हि प्रकृतकर्मरूपप्रत्यायनानुवादः किमिति न स्यात् । ततश्चोदितानां 'दर्शपूर्णमासाभ्यां यजेत' इत्यधिकारसङ्कथात् राजसूयवत् सर्वयजीनां प्राधान्यं स्यादाघारादीनां न सिध्येत् । उच्यते । सर्वानुवादाश्रयणे दर्शपूर्णमासाभ्यामिति द्विवचनं नोपपद्यते । सर्वसमुदायानुवादद्वयेन सर्वेषामेव दर्शशब्दवाच्यता पूर्णमासशब्दवाच्यता चावगम्यते । ततश्च दर्शाश्च पूर्णमासाश्चेति कर्मधारयोऽयं समासः । तत्र यजीनां विशेष्याणां बहुत्वात् बहुवचनं स्यान्न द्विवचनम् । अतस्तदनुरोधेन केषांचिदेव तावत् 'य एवं विद्वान् पौर्णमासीं यजते' इत्यनुवादो न सर्वेषाम् । तथा 'य एवं विद्वानमावास्यां यजते' इति केषांचिदेवानुवादः । तेनानुवादद्वयेन समुदायद्वयापत्तेर्द्विवचनान्तोपपदनेन तेषामेवाधिकारसम्बन्धः । तत्र केषां पूर्णमासीगुणकोऽनुवादः केषां चामावास्यायुक्त इत्यपेक्षायां कालनिमित्तोपपदानुसारेण उत्पत्तिशिष्टयोगिनामेवानुवादः ।

इति निश्चयो जायते । अन्यथा विशेषाग्रहणादिति न सर्वानुवादो न सर्वेषां प्राधान्यमिति । तथा गुणान्तरयोगादप्यनुबन्धभेदोऽवगम्यते । उत्पत्तौ यत्कालानुबद्धं यत्कर्म प्रतीयते ततोऽन्येन कालेन अनुबद्धं तत्र शक्यते अवगन्तुमित्यनुबन्धभेदावगमः । तथा एतान्तरादपि अनुबन्धभेदोऽवगम्यते । अन्याय्य ह्येकस्यार्थस्यानेकशब्दत्वमिति भेदस्तावत् औत्सर्गिकः । यत्र तु बलीयसा प्रमाणेनानेकशब्दत्वमपि गम्यते भवति तत्रैक्यम् । तथा विधानान्तरादपि कर्मान्तरत्वावगमः । विधानान्तरे च सन्निहिते कर्मण्यनेकगुणसंयुक्तकर्मग्रहणात् । तत्र हि गुणविधित्वात्तत्र सम्भवत्यनेकगुणश्रवणादनेकगुणविधाने वाक्यभेदप्रसङ्गात् । गुणविशिष्टकर्मविधौ तु तस्यैवैकस्य विधानात् एकवाक्यत्वनिर्वाहात् कर्मैव विधेयम् । विधीयते चेत्तत् प्रकृतादन्यत्वम् । तथाऽसन्निधानादप्यप्रत्यभिज्ञानात् कर्मविधानावगमात् भेदावगमः । प्रकरणान्तरमपि कर्मणः प्रक्रियान्तरविधानान्तरमेव । संख्या तु भावार्थमात्रभेदे प्रभवति न विषयभेदे । यथा 'सप्तदश प्राजापत्यान्' इति प्राजापत्यप्रातिपदिकोपात्तानां द्रव्यदेवतासम्बन्धानां नियोगविषयत्वम् । ते च सकृदेवाभिहिताः सकृदेव समाप्यन्ते 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इतिवदिति न भेदेन विषयभावं भजन्ते । काम्यभेदादपि शास्त्रभेदोऽवसीयते । यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति च । नहि यावज्जीवचोदना काम्याधिकारे कालविधानार्था । रूपप्रसङ्गात् । यावज्जीवनलक्षितो हि कालो विधेयः । किंच जीवनकाल एव नियोगस्य प्राप्तत्वात् यावदर्थसम्बन्धेन विधेयत्वम् । तावांश्च कालो नानभ्यस्तेन प्रयोगेण शक्यते व्याप्तुमिति यजेतेत्यपि यागमभ्यसेदिति वर्णयितव्यम् । ततश्चाभ्यासलक्षणाऽप्यपरेति जीवतोऽधिकारान्तरमेतदाश्रयणीयम् । जीवने ह्यधिकारिविशेषणे सति जीवतो अवश्य यागेन भवितव्यमिति सिद्धा यागेन जीवनव्याप्तिरभिधीयते यावज्जीवमिति । ततश्च नियोगभेदान्नियोगस्यापि भेदः अवश्यभावि । तद्भेदाच्च शास्त्रभेद एव । नियोगो हि स्वसंबन्धितया मामेव कार्यमिति

धर्मत्वाच्च । अत्र परसमवेतप्रवृत्तिहेतुत्वं अत्र विवक्षितम्, फलं तु प्रवर्तयितुरत्र प्रवृत्तहेतुः न परसमवेतप्रवृत्ते इति नोक्तातिव्याप्तिः ।

महामुद्गलभट्टास्तु आहुः । धर्मशब्देन अपूर्वनिरासः । प्रवर्तयितृशब्देन इष्टसाधनत्वयोः । आद्य विशेषणेन निषेधवाक्यानामिति । तन्न । धर्मशब्देन अपूर्वनिरासायोगात् । अपूर्वं हि प्रवर्त्यगतं प्रवर्तयितृगतं वा, आद्य प्रवर्तयितृ इति पदेन प्रवर्तयितृमनन्तरोक्ते प्रवर्त्यगतस्य चापूर्वस्य प्रवर्तयितृत्वसंबन्धाप्रसिद्धेः तद्गताति व्याप्तेः प्रवर्तयितुरिति पदप्रयोगेनैव निरासात् । द्वितीये प्रवर्तयितृगतस्य अपूर्वस्य प्रवर्त्यप्रवृत्तिं प्रति हेतुत्वाभावेन तद्गतातिव्याप्तेः प्रवृत्तिहेतुः इत्यनेनैव निरासात् इति । तदिदं भट्टसोमेश्वरमतं तदभिधाव्यापारस्यैव विधित्वभावनात्वे साधकाभावात् निर्मूलम् । तदेतन्मतं मिश्रैः पञ्चाङ्गे शास्त्रदीपिकायामुक्तम् । अथान्वयविशिष्टभावनाप्रतिपादनं चास्य व्यापारः । अस्य प्रवर्तकस्य अर्थप्रतिपादनरूपस्य व्यापारस्य प्रवर्तनारूपत्वमिति ।

यत्तु 'अस्तु तदभिधानाख्यो व्यापारोऽस्य प्रवर्तकः । तस्य ह्यर्थप्रतीत्याख्यकार्यफलस्य केवलम् । फलस्य प्रवृत्तिहेतुत्वं लिङ्शब्दस्येति लाघवम् ॥' इत्याशङ्क्य 'शब्दान्तरगताऽप्यभिमताभिधा स्यात् प्रवर्तिका । पक्षेऽर्थतो विशेषश्चेत् स एव स्यात् प्रवर्तकः ॥' इति दोषद्वयमुक्त्वा 'न चान्या अभिधेयत्वाद्विशेष कार्यतो गते । न युक्त ह्यभिधेयस्य मीमांसा या प्रसज्यते ॥' इत्यनेन पूर्वदोषद्वयोद्धारपूर्वकं ■ दोषद्वयमुक्त्वा तदुद्धारः । 'अथ प्रवर्तनात्वेन कार्यादन्यत्वोधितः । तद्रूपेणाभिधेयत्वं तथान्यासु न विद्यते ॥' इत्याशङ्क्य 'तन्नाम्ना ह्यभिधानात् प्राक् चेत् प्रवर्तकरूपता । स्याद् व्यर्थमभिधेयत्वं नास्ति चेत् स्यादसत्यता ॥' इति विकल्प्य दूषणद्वयमुक्तम् । तदेतत् लिङः प्रवर्तकत्वं विहाय तदभिधायाः प्रवर्तकत्वे युज्यते । अभिधायां विनाऽपि हि प्रवर्तकत्वमावश्यकं लोके आप्तवाक्ये पदे च लिङादेः पर्यवसेयमभिधेयं नाम् । ननु इदं दूषणं लिङः प्रवर्तकत्वे अभिधायाश्च प्रवर्तनात्वे प्रसज्यते । यथा हि अभिधायां बोधाख्यकार्यात् बुद्धोऽपि न प्रवृत्तिहेतुः एव त्वदभ्युपेतोऽपि व्यापारोऽग्निहोत्रादौ प्रवृत्तिं दृष्ट्वा आप्तवाक्याद्वा अस्ति कश्चित् लिङः अत्र प्रवृत्तिहेतुर्व्यापार इति सामान्यतोऽवगतोऽपि न प्रवृत्तिहेतुः । अत त्वया अपि स्वौ प्रवर्तनात्वेन शब्देन तत्रापि लिङैव अभिहित सन् स्वस्य प्रवर्तनात्वनिर्वाहाय स्वविषयस्य इष्टसाधनताऽऽक्षेपमुखेन इच्छां जनयन् प्रवृत्तौ हेतुः वाक्यार्थज्ञाने इव पदाभिहिते एव पदार्थे इत्यवश्यमभ्युपेयम् । तच्च एतत् ममापि तुल्यम् इति न सोमेश्वरोक्तदूषणावकाशः कश्चित् । तस्मात् वेदे लिङादिरेव प्रवर्तकः । तदभिधैव च प्रवर्तनाविशेष प्रेरणा विधिः इति चोच्यते । इति विध्याख्यशब्दभावनानिरूपणम् । (अथ प्रतिषेधाख्यशब्दभावनानिरूपणं मीको पृ १७३९ इत्यत्र द्रष्टव्यम्) । भाट्ट पृ ७७–७८

* शब्दभावनायाः अशक्यत्वमाहुः । 'लिङोऽभिधा सैव च शब्दभावना, भाव्या च तस्याः पुरुषप्रवृत्तिः । सम्बन्धबोधः करणं तदीयं प्ररोचनं चाङ्गतयोपयुज्यते ॥' अस्यार्थः – लिङः अभिधानामकस्वप्रवृत्तिः स्वशक्तिः अवश्यं वाच्या । न च तत्र मानाभावः, व्यापारभिन्नस्य परनिष्ठव्यापारजनकत्वं स्वनिष्ठव्यापारद्वारैवेति व्याप्तेः । चक्रभ्रमिजनकस्य दण्डादेः स्वनिष्ठसंयोगादिद्वारकत्वदर्शनात् । तथा च लिङ्पदेनापि पुरुषप्रवृत्तिरूपः परनिष्ठव्यापारो अवश्यं जननीय इति स एव अभिधात्मकः । व्यापारस्य व्यापारापेक्षायाः अनवस्था स्यात् इति व्यापारभिन्नस्येति । व्यापारिणि स्वनिष्ठव्यापाराजनकेऽपि व्यापारापेक्षायाः अनवस्थापत्तेः परनिष्ठेति । शब्दे ज्ञानद्वारा प्रवृत्तिहेतुत्वात् सिद्धसाधना स्यात् इति शब्दनिष्ठाभिधासिद्ध्यर्थं स्वनिष्ठेति । विधिस्थले भाव्यम् इह भाव्या चेति । अर्थभावनैव शब्दभावनामाद्या इत्यर्थः । येन इत्याकाङ्क्षायां करणमाह सम्बन्धबोध इति । अगृहीतलिङ्शक्तिकस्य अप्रवृत्त्या शब्दज्ञानस्य तत्सहकारित्वनिर्वाहाय ।

सकेतश्च तद्वाक्यघटकपदाना तत्तदर्थे, लिङश्च प्रवर्तनात्वादिविशिष्टे बोध्य । मणि पृ ९१. ● शब्दभावनायाः भाव्य आर्थीभावना । विधायको लिङादि करणम् । अर्थवादसपादिता स्तुति इतिकर्तव्यता । सेय शब्दभावना लिङादिभि गम्यते । नि. २।१।१ वर्णक २

● शब्दभावनेतिकर्तव्यतानिरूपणम् । सेय द्वयी अपि (विधिप्रतिषेधरूपा) शब्दभावना प्राशस्त्याप्राशस्त्यज्ञानानुगृहीतैव स्वफलभूता प्रवृत्ति निवृत्ति च जनयति इति तदितिकर्तव्यतात्वेन अपेक्षते, प्रकृते च अर्थवादे स्वाम्नानार्थवत्त्वाय लक्षितम् । तस्याश्च इतिकर्तव्यतापेक्षा तदन्वयश्च अथमावगमात् विध्यन्वयात् कर्तव्यत्वेन प्रतीतौ सत एव च भाव्यकरणयो आका ङ्क्षापूर्वमन्वये स्यात् नान्यथा । न च शब्दभावना ज्योतिष्टोमादिप्राशस्त्यविधिवाक्येषु स्वरूपत. सत्यपि कर्तव्यत्वेन प्रतीयते, किंतु अर्थभावनैव । अत अध्ययनविधौ सा विधीयमानत्वात् कर्तव्यत्वेन प्रतीयते । तदुक्त वार्तिके 'सा तत्र प्रवर्तन' इति । व्याख्यात चाभियुक्त 'अध्ययनविधिपरत्वात् कार्यत्वेन प्रतीयते' इति ।

ननु तत्रापि आख्यातप्रत्ययोक्तार्थभावनैव अध्ययनकर्तृका विधीयते न तु प्रवर्तना, तस्या आख्यातवाच्यत्वाभावात्, लिङा च विधिद्वयानुक्ते । अत्रोच्यते । न तावत् ऋतुहोमवत् द्वितीयाभङ्गोऽत्र 'पुरोहित वृणीते' इतिवत्तु द्वितीयाऽङ्गभूतप्रधानभाव स्वाध्याय प्रति गुणभूताध्ययनभावना अवगता । तत सस्कार्यत्वानुपपत्त्या अयमेव विधि अवस्थानुसारेण स्वाध्याय समविनि इष्टे विनियुज्य पर्यवस्यति इति तृतीये उक्तम् । तत्र विध्यर्थो तावत् पुरुषप्रवृत्तिरेव इष्टम् । तत्र च शब्दाना करणत्व वा कर्तृत्व वा निरूप्यते इति वार्तिकात् लोके उभयविवक्षासंभवेऽपि वेदे प्रवर्तयितृपुरुषाभावेन कर्तृव्यापारव्याप्यत्वनियामकव्यापाराभावात् स्वातन्त्र्याच्च कर्तृत्वेनैव स्वाध्यायो विनियुज्यते । अन्तरङ्ग च कर्तृकारकक्रियाया । अत एव आख्याताभिहिता संख्या अनभिहितेऽपि कर्तर्येव अन्वेति इत्युक्तं इत्युक्त कर्माधिकरणे । एव कर्तृतया स्वाध्याये विनियुक्त अर्थवादे गुणत्वात् विधायकस्य च प्राधान्यात् प्राशस्त्यवाक्यस्य लिङ कर्तृत्वेन विनियुज्यते, अध्ययनेन उपात्ता लिङ भावयेयुरिति । तत्र 'किं' इत्यपेक्षिते सामर्थ्यादेव पुरुषप्रवृत्ति इति भावयेयु इतियत् अध्याहृत्य संबध्यते । श्रुतार्थापत्तिमूलकश्चाय अध्याहारः 'इषे त्वा छिनद्मि' इत्यादिवत् । तदुक्त अर्थवादाधिकरणवार्तिके 'तत्र किमित्यपेक्षिते सामर्थ्यादेव पुरुषप्रवर्तन इति गम्यते' इति । तेन इद श्रुतानुमितैकदेशनिष्पन्न महावाक्य भवति 'अध्ययनसस्कृता स्वाध्यायपदोपात्ता लिङ पुरुषप्रवृत्ति भावयेयु' इति । अयमेव च वाक्यार्थ पारमार्थिक, अन्यथा शब्दभावनाया कार्यत्वानवगमात् तदितिकर्तव्यताभूतप्राशस्त्यलक्षणया अर्थवादप्रामाण्य न सिध्येत् ।

ननु अर्थवादाधिकरणे एव आद्यसूत्रे च आचार्यै 'कर्मसु अर्थज्ञानस्य लैङ्गिकविनियोगात् तदर्थं अध्ययनविधि अधीतेन स्वाध्यायेन फलवदर्थावबोध भावयेत् इति' इत्युक्तम् । तद्विवक्षा कर्तृत्वेऽपि प्रवृत्तिफलत्वोक्तिश्च । नयमुक्तम् । न तु विरोध । शब्दभावनाया हि लिङादीना कर्तृत्वे सति अर्थात् फलवदर्थावबोधे करणत्व फलित भवति इति प्रवृत्तिकर्तृत्वमेव अर्थावबोधकरणत्वेन फलित व्याख्यात इत्यविरोध । प्रवृत्तिफलत्व तु फलवदर्थावबोधद्वारा इति न भाष्यद्वयविरोध । लिङो हि प्रवृत्तिरूपस्य वाक्यार्थस्य इष्टसाधनतया बोध कृत्वा प्रवृत्ति जनयन्ति नान्यथेति ।

ननु एवमपि चेतनप्रवर्तनात्मा विधि कथ अचेतनान् लिङ नियुञ्जीत इति चेत्, सत्यम् । उपायस्याप्यसत्त्वेऽपि उपेयसत्यत्वात् । यथा वर्णलोपागमविकाराद्यसत्यत्वेऽपि तेन सत्यमेव साधुत्व ज्ञाप्यते शिष्टपरिग्रहात् व्याकरणप्रामाण्यात् । एवमिहापि अध्येता तावत् 'लिङ् मा प्रवर्तयति' इति लिङ्व्यापारभूतशब्दभावनाकर्मं यत् बुध्यते तद्गतचेतनस्य लिङि आरोपात् नियोज्यत्वमसत्यमेव । तेन उपायेन शब्दभावनाकर्तव्यत्व सत्य ज्ञाप्यते अर्थवादप्रामाण्यात् । तस्या हि अकर्तव्यत्वे तदितिकर्तव्यताभूतप्राशस्त्यानपेक्षणात् तदन्वयाय अर्थवादप्रामाण्य न स्यादिति । एव कर्तव्यत्वेन अवगताया

● 'शमिता च शब्दभेदात्' (३।७।१३।२८) इत्यधिकरणे वार्तिककृतोक्तम्– अत एव आर्त्विज्यं निन्दन्ति– इति । तथापि विशेषनिषेधो दोषनिरोधार्थत्वेन अर्थवानेवेति । बाल. पृ. ५७. ● शमिता द्वेधा, संज्ञपयिता विशसिता चेति । तत्र संज्ञपयिता ऋत्विग्भ्योऽन्यः । विशसिता तु अध्वर्युगणान्तर्गतः कश्चित् । कु. ३।७।१३।२९. ● शमिता भूताभूतसाधारण. य. कश्चित् इति स्थित तृतीये । संकर्ष. २।१।१२. ● शमिता । शमयति इति शमिता । यौगिक एव शब्दः । भा. ३।७।१३।२९. ● शमितारः नापूर्वाः किंतु प्रतिप्रस्थात्रादय एव शमितारः । संज्ञाभेदस्तु पशुसंज्ञपनयोगात् । वि. ३।७।१३. ● शमित्रा सह शामित्रशालाया गन्तार. इतरे ऋत्विज एवेति केचित् न तु तद्भिन्ना ये केचित् । संकर्ष. २।१।१३.

● शमीधान्यभक्षणस्य न निषेध., आग्रयणाऽकरणेऽपि । संकर्ष. २।१।१२. मीको. पृ. ८०६ 'आग्रयणाकरणेऽपि मुद्गादिशमीधान्याना०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● शमीमय्यः हिरण्मय्यो वा स्रुच. समाहर्त्याः वरुणप्रघासेषु सिद्धान्ते । पूर्वपक्षे तु नानावृक्षस्रुच उत्पादयितव्याः ऐमार्गार्थत्वेन । भा. २।१।४।१२.

● शम्या यथायुधम् । 'यथायुधानि समरन्ति' 'शम्यया इदमुदपानि' । वि. ३।१।०.

● शयानत्वं परिधिधर्मः । वि. १२।२।११.

● शराः बर्हिःशब्दलक्षिते तत्कार्ये विहिताः तत्कार्यद्वारकत्वेन प्राप्यमानं बर्हिः बाधन्ते । 'शरमयं बर्हिर्भवति' । भाट्ट. १०।४।१. ● शरैरपि कुशाः प्राप्ता एव बाध्यन्ते इत्युक्तं बलाबलाधिकरणे (३।३।७)। भा ३।६।१।१८. ● शरै. कुशानां अगत्या बाधः । सु पृ. ८८३.

● शरादिषु । मुख्यक्रमस्य औपदेशिकप्रयोगविधुत्पत्तीत्वेन औपदेशिकत्वात्, तस्यापि अतिदेशोत्तरकालत्वे शरादिषु बाधोत्पत्तेः मुख्यक्रमस्य बलवत्त्व इति चेत । प्रयोगविधे. औपदेशिकत्वेऽपि मुख्यक्रमस्य कल्प्यत्वात् शरन्यायानुपपत्तेः । भाट्ट. ५।१।१०

● शरेषीका शरस्य दर्भविशेषस्य इषीका पुष्पगुच्छादधोभागे वर्तमानः काण्डः शरेषीका । तया अञ्जनं कुर्वन्ति । के.

☞ शरन्यायः । शरकुशन्यायः । सोमारौद्रयागे उपदिष्टैः शरैः आतिदेशिकाना कुशाना बाधः ॥

प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् । १०।४।१।१ वर्णकं २ ॥

भाष्यम्— एव वा । इदमाम्नायते, 'सोमारौद्रं चरुं निर्वपेत्कृष्णाना व्रीहीणामभिचरन्' इति । तत्रेदं श्रूयते 'शरमयं बर्हिर्भवति' इति । तत्र संशयः किं कौशं निवर्तते, नेति । किं प्राप्तम् ? उभयस्य प्रमाणावगतत्वात् समुच्चय. ।

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् । २ ॥

भाष्यम्— एवं प्राप्ते, ब्रूम. । चोदनालिङ्गसंयोगे तद्विकार. प्रतीयेतेति । अस्ति हि तत्र प्रकृतिलिङ्गेन बर्हिःशब्देन संयोग. । तस्मात् प्राकृतस्य निवृत्तिरिति । (विस्तरादिसर्वग्रन्थेषु अनेन द्वितीयेन सूत्रेण द्वितीयमधिकरणमेव स्वीकृतम् । भाष्यीयं तृतीयं वर्णकं तु द्वितीयाधिकरणीय द्वितीय वर्णक इति स्वीकृतम्) ।

शा— उभयो कुशशरयोः प्रमाणावगतत्वात् समुच्चयः, प्रकृतकार्यत्वाच्च निवृत्तिः (कुशानाम्) इति ।

सोम — पूर्वाधिकरणोक्त–शरवैयर्थ्यसाधनार्थत्वात् संगतिः । 'नित्यं वृद्धशरादिभ्यः' (पा० ४।३।१४४) इति विकारार्थे शरशब्दात् मयटः प्रतिपदोक्तत्वेन प्राबल्यात् विकारार्थं एवायं मयट् । ततश्च बर्हिषो द्रव्यस्य कुशविकारत्वासंभवात् तेन तत्कार्ये शरणं लक्षयित्वा तत्र विधानात् प्रत्यक्षवचनेन कार्यापत्त्या युक्तो बाधः (शरैः कुशानाम्) ।

वि— 'समुच्चेय शरमयं कौशेनोतास्य बाधकम् ।, प्रत्युर्बस्य निवेशात्तो, मैवं प्रतिपदोदितः ॥' २.

भाट्ट— 'सोमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन्' इति विहितेष्टौ 'शरमयं बर्हिः' इति

श्रुताः शरास्तु प्राकृतबर्हिर्बाधका एव । न च पाषाणमयी भूमिरितिवत् मयड्-प्रत्ययबहुत्वसंयोगमात्रविधानात् कुशबाधानापत्तिः, अदृष्टार्थत्वप्रसङ्गेन शराणामेव बर्हिःकार्योद्देशेन विधानात् । न च तथापि बर्हिःकार्यस्य स्तरणस्य शरविकारताऽनुपपत्तेः विकारार्थमयडनुपपत्तिः । वस्तुतः संस्कारविशिष्टस्य द्रव्यस्य प्रकृतौ कुशप्रकृतिकस्य विकृतौ शरप्रकृतिकत्वेन 'खादिरो यूपो भवति' इतिवत् विकारार्थमयडनुपपत्तेः । शास्त्रदीपे तु अयन्त्वे बर्हिःशब्दे स्तरणादितत्कार्यलक्षणया तदुद्देशेन शरमात्रविधानात् युक्त एव कुशबाधः । न च तथापि चोदकेन कार्यस्य सकलकपदार्थविशिष्टस्यैव पूर्वं प्राप्ततया पश्चाद्वैयर्थ्यमिया अन्यतराकाङ्क्षया अन्वीयमानानां शराणां कुशाविरोधेनैव अन्वयात् कुशाभावे प्रतिनिधित्वेनैव अन्वयोपपत्तेर्न कुशबाधकत्वमिति वाच्यम् । आकाङ्क्षाक्रमेण कार्योपस्थित्यनन्तरं तत्सकलपदार्थापेक्षायामेव शरविधिप्रवृत्त्यङ्गीकारात् शरैरेव तदाकाङ्क्षाशान्तौ तत्कार्ये कुशवैशिष्ट्याभावत्वेन कुशानामतिदेशेन वस्तुतः प्राप्त्यभावात् । अत एव वाक्यकृतौ प्रतिमादावेतदपि प्रतनाथः । शराणां च विकृत्याकाङ्क्षायामनिवृत्तायामेव ग्रहणम् । अस्तु वा कार्याणामेव प्रथममतिदेशेन अनन्तरापेक्षया पदार्थानां पृथगतिदेशः, तत्र अतिदेशप्रापितकार्योद्देशेन शरविधेर्न कुशादेः अतिदेशकल्पनेति । निरूपितरूपाणामेव च पदार्थानां पृथगतिदेशाश्लोऽन्धाधानुपपत्तिः । अतस्तत्र युक्तो बाध, इति प्रत्युदाहरणमात्रमिदम् । २.

मण्डन— 'कुशानां बाधकाः शराः ।' २.

शंकर— 'बाध्यास्तिरस्ट् शरैः कुशाः ।' २.

● शरन्यायः नक्षत्रेष्टौ उपदिष्टैः उपहोमैः नारिष्टहोमानां अतिदिष्टानां शरवत् बाधः । इति प्राप्ते, अतिदेशेन कार्यद्वारभावेन नारिष्टानामपि प्राप्त्युपपत्तौ शरन्यायवैलक्षण्येन समानस्थानत्वमात्रस्य अप्रयोजकत्वात् । शराः हि बर्हिः-शब्दलक्षिते तत्कार्ये विहिताः युक्तं यत् तत्कार्यद्वारभावेन प्राप्यमाणं बर्हिर्बाध्यन्ते इति । भाट्ट. १०।४।१.

● प्रयोगविधेरौपदेशिकत्वेऽपि स्वरूपेण मुख्यक्रमस्य कल्प्यत्वात् शरन्यायानुपपत्तिः । भाट्ट ५।१।१०.

● शरपुरुषीय इति न्यायः । काकतालीयवदय मिति । यथा— शरश्च क्षिप्तः प्राकाराच्च पुरुष उत्थितः. स तेन हतस्तत्तुल्यं शरपुरुषीयमिति । साहस्री. ६७९.

● 'शरमयं बर्हिः' इति शराः कुशान् निवर्तयन्ति न्येनै । भा. १०।४।१।१, ● 'शरमयं बर्हिर्भवति' इति प्राकृतं कार्यं लक्ष्यते प्रकृतिलिङ्गेन द्रव्यशब्देन । १२।३।२।८ ● शरमयं बर्हिरिति वचनम् । यत्र पाश्चात्यमपि प्रमाणं बलवत् भवति यथा 'शरमयं बर्हिः' इति वचनम्, न तत्र दौर्बल्यम् । कल्प्यत्वे पर दौर्बल्यम् । रत्न. ५।१।१०।१८.

● शरवत् । यथा 'शरमयं बर्हिः' इति वचनप्रामाण्यात् शरैः कुशा बाध्यन्ते । भा. १०।७।३।११, १०।७।१६।७१. ● शरवत् । 'शरमयं बर्हिः' इति वचनं शास्त्रं पूर्वप्राप्तकुशबाधेन प्रवर्तते । अध्वरकल्पायां तु प्रयोगवचनाश्रयः क्रमः कल्प्यः । तस्मात् आतिदेशिकः क्रम एवेति बार्हस्पत्यचरुनिर्वाप. पूर्वं ततः सारस्वता त्वधर्मा । भा. ५।१।१०।१७–१८ । बर्हिःकार्ये शरविधानार्थं तत्कार्यप्राप्तये चोदकस्य उपजीव्यत्वेऽपि कुशप्राप्तेरनपेक्षत्वात् चोदकप्राप्तकुशबाध । सोम.

● शरशब्दस्यापि कुशेषु प्रयोगो दृश्यते 'शरवणमेवेद कुशवनम्' इति । भा. ८।३।६।१३, स तत्र शरशब्दो भाक्तः प्रयुज्यते । दीर्घत्वात् पृथुत्वात् सादृश्यवादोऽसौ— 'शरवणमेवेद कुशवनम्' इति । स्वार्थे वर्तमानः सादृश्यं गमयति, स्वार्थं अजहत् कथं गमयेत् । तस्माच्छरेष्वेव तत्र शरशब्दस्य प्रयोगो न कुशेषु । ८।३।६।२४.

● 'शरदि वैश्यः' अग्निमादधीत । भा. ११।१।२।२, ● 'शरदि वैश्यम्' उपनयीत । ६।१।७।२३.

● शरावः । 'षड्शरावमोदनं निर्वपेत्' इत्यादौ शरावादिशब्दस्य तत्परिमिते प्रयोगदर्शनम् । सु. पृ. ९२६ .

● शरीरं आतिवाहिकं नाम पूर्वोत्तरदेहयोरन्तराले ज्ञानसंतानसंधारणार्थं कल्प्यते, तदपि विन्ध्यवासिना निराकृतम् । 'अन्तराभवदेहस्तु निषिद्धो विन्ध्यवासिना । तदस्तित्वे प्रमाणं हि न किंचिदवगम्यते ॥'

इति चेत्तदेतत्र चतुरचेतसां चेतसि चमत्कारमाविष्करो-तीति सर्वदर्शनसंग्रहे अक्षपादीये । साहस्री. ७१८.

• शशाङ्कस्य रोहिणी । शा. ३।८।१।९.

☞ ‘शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते । प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥’ इति न्यायः । साहस्री. ९१२.

• शस्–प्रत्ययः स्वार्थिकः । ‘ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ’ ( पा. ५।४।४२ ) इति सूत्रे एकैकशः इति भाष्योदाहरणेन स्वार्थिकत्वं ज्ञापितत्वात् । उक्तं च धातुवृत्तौ– ‘ एकैकशः पितृयज्ञानि इत्यत्र शसः, ‘ग्रामशः’ इत्यादिवत् अनन्तस्वार्थिकत्वात् वीप्सायामनभिधानात् द्विर्वचनम्’ इति । सोम. १।२।१ पृ. ३.

• शसं अर्थकर्म न संस्कारः ‘ शसति ’ इति कर्तृत्वप्रतीतेः । वि. १०।४।२७. • शसं प्रधानकर्म न गुणकर्म । २।१।५।१३–२९. • शस्त्रं ( शसन ) स्तुतिरेव अप्रगीतमन्त्रसाध्या । गुणगुणिसम्बन्धकीर्तनं च स्तुतिः । शा. १।१।५।१३ पृ ४१६.

• सोमशस्त्रे आगस्त्याङ्कमुखे ग्रहग्रहणनिमित्ते । भा. १०।५।१२।५०.

• शस्त्रम् । यथा सोमस्य स्तौति शंसति इति कर्तृत्वसमवायात् प्रधानकर्मणी । भा. १०।४।२०।३९. • शस्त्रवन्तः सोमाः वैश्वदेवग्रहपर्यन्ताः । अवशिष्टास्तु शस्त्ररहिताः । वि. ११।३।१५. • शस्त्रवतां सोमाना-मुपरिष्टात् प्रचारः प्राजापत्यपशुना वाजपेये इति एकः पूर्वपक्षः । अथ कतमोऽसौ काल. ? तार्तीयसवनिकस्य वैश्वदेवस्य यदूर्ध्वम् । भा. ११।३।१५।४९.

• शस्त्रस्तोत्रमन्त्राणां प्रकृतानामेव अभिप्लुति भक्तिवादेन प्रयोगः । १०।८।२४।६०. मीको. पृ. ६५ ‘ अभिप्लुति स्तोत्रशस्त्रमन्त्राणा॰ ’ इत्यत्र अधिकरण द्रष्टव्यम् ।

• शस्त्रस्तोत्रवान् षोडशिग्रहः । १०।५।१२। ४९–५२.

• शाक–(प्राचीन–) पर्वौषधीनां भक्षण यथा-कामम् । संकर्ष. ३।१।११. मीको. पृ. ८५६ ‘आग्र-यणाकरणेऽपि शाकप्राचीनौषधीना॰ ’ इत्यत्र अधिकरण द्रष्टव्यम् ।

• शाक्याः । ‘ कस्यचित् जायते तुष्टिरशुभेऽपि हि कर्मणि । शाक्यस्येव कुहेतूक्तिवेदबाह्यप्ररूपणे ॥ पशु-हिंसादिसम्बन्धे यज्ञे तुष्यन्ति हि द्विजाः । तेभ्य एव हि यज्ञेभ्यः शाक्याः क्षुभ्यन्ति पीडिताः ॥ ’ वा. १।३। ३।७ पृ. २०४.

• शाक्या(कस्या)नामयनं षट्त्रिंशत्सु संवत्सरेषु अनुष्ठेयम्, तत्र ‘ मलिनेऽहनि गृहपतिर्मृगया याति, स यान् मृगान् हन्ति तेषां तरसाः सवनीयाः पुरोडाशा भवन्ति ’ । अत्र तरस–( मांस )-मयत्व सवनीयपुरोडाशेष्वेव, न सर्वपुरोडाशेषु । वि. ३।८।२३ • शाक्यानामयने ‘ तरसपुरोडाशमक्ष-सरोधात् ’ इति छन्दोगसूत्रकृता अवमिश्रणेन मांसस्य पुरोडाशनिष्पादने सामर्थ्यमुक्तम् । तद्विषयमेव च धान्यशब्दोहानूहविचार ( धान्याधिकरणे ९।१।१२। ३८–३९. वर्णक २ ) । सु. पृ. ६३८–३९. • शाक्या– ( कस्या– )नामयने षट्त्रिंशत्संवत्सरे सत्रे पेषणमन्त्रे ‘ धान्यमसि ’ इत्यत्र ‘ मांसमसि ’ ( यद्वा-सत्तु ‘ तरसमसि ’ ) इत्यूहः कर्तव्य । भा. ९।१। १२।३८–३९ वर्णक २. • शाक्या–(कस्या-)नामयने षट्त्रिंशत्संवत्सरसाध्ये सवनीया एव पुरोडाशा मांसमया न सर्वे । मांसाधिकरणम् । ३।८।२३।४३–४४.

• शाक्यानामयनाधिकरणम् । ३।८।२३। ४३–४४. मीको. पृ. ३१३६ ‘ मांसाधिकरणम् ’ इत्यत्र द्रष्टव्यम् ।

• शाक्यादयः । ‘ यथा मीमांसकत्रस्ताः शाक्य-वैशेषिकादयः । नित्य एवाऽऽगमोऽस्माकमित्याहुः शून्य-चेतनम् ॥ ’ वा. १।१।६।१२ पृ. २३५. • शाक्या-दयः । ‘ स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतवः । कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति ॥ ’ तेन कर्मानुरूप्यसामान्यतो दृष्टार्थापत्तिवत्त्वात् तदभिप्रायचरित-त्वधर्माभासमभ्युपगतं सत्यमपि अहिंसादि सदनि-मित्तिश्रीरवत् अनुपयोगि अविश्रम्भणीयं च ।१।३। ३।७ पृ. २०३. • शाक्यादेः आत्मविज्ञानचरितु-

प्रमादः, एव चैत्यवन्दन-वद्धन्दनशूद्रसम्प्रदानकरणादीनां भेदाः सम्भवन्ति । मूलान्तरकल्पनं च प्रागेव प्रत्याख्यातम् । 'लोभादिकारणं चात्र बहवेवान्यत् प्रतीयते । यस्मिन् सन्निहिते दृष्टे नास्ति मूलान्तरानुमा ॥ शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम् । हेतुजालविनिर्मुक्तां न कदाचन कुर्वते ॥ न च वैदिकमूलत्वमुच्यते गौतमादिवत् । हेतुपक्षाभिधीयन्ते ये धर्मे दूरतः स्थिताः ॥ एत एव च ते, येषां वाङ्मात्रेणापि नार्चनम् । पाषण्डिनो विकर्मस्था हैतुकाश्चैव एव हि ( मनूक्ता ) ॥' एतदीया ग्रन्था एव च मन्वादिभिः परिहार्यत्वेनोक्ताः । 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥' इति । तस्माद्धर्मं प्रति सर्व एव जातीयकं प्रामाण्येन अनपेक्ष्यं स्यात् इति सिद्धम् । वा. १।३।४ पृ. १९४–१९६.

शा— यान्येतानि त्रयीविद्भिर्न गृहीतानि शाक्यादिभिः ( आदिशब्देन बार्हस्पत्यगौतमपाशुपतपाञ्चरात्रादि- ग्रहः –मोट. ) निर्मितानि धर्मशास्त्राभासानि, तेषामनेन अप्रामाण्यं पूर्वोक्तमूलोक्तकर्तृसामान्यमुदाहरणेन उच्यते । तेषां हि प्रत्यक्षादिमूलत्वेन प्रामाण्यं प्रत्यक्षसूत्रे निराकृतम् । मन्वादिवत् वेदमूलत्वेन प्रामाण्यं इह निराक्रियते । तेषां हि अस्मत्यपि प्रसिद्धवैदिकेषु मिहोत्रादिषु कर्तृसामान्ये भिन्नग्रन्थाना वेदा मूलं भविष्यति । यथैव आथर्वणस्य त्रयीभिन्नग्रन्थानरूपता, तथा चतुर्भ्योऽपि वेदेभ्यः भिन्नरूपा वेदाः सम्भवेयुः । ते च इदानीं प्रलीना. । मन्वादीनामपि हि केचित् प्रलीनशाखामूलत्वं अनुमन्यन्ते, तद्वदत्रापि भविष्यति । इथ च सम्भवति प्रामाण्ये नाप्रामाण्यं युक्तं इति मन्यन्ते केचित् आचार्याः । सा च मन्दवैफल्यार्थेन निराकर्तव्यैव इत्येतदर्थं इदमधिकरणम् । सिद्धान्तस्तु– अविच्छिन्नवैदिकसम्प्रदायानुसारिणां मन्वा( । न्वा ) दिषु अनुरूपत्वसम्भवोऽपि वेद कल्पित । शाक्यादिषु इदमत्र वैपरीत्यं अवैदिकप्रमाणं च तत् इयं च विद्वानां स्मरणम् । वेदवैदिकद्वेषिण एव तेषां प्रामाण्यमनुमन्यन्ते । दृष्टानुसारिणी च कल्पना, न तद्वैपरीत्येन । अतोऽत्र वेदकल्पना दुर्लभेति इति अप्रामाण्यमेव तेषां असन्मूलत्वादिति । १।३।४ पृ. २७.

भाट्ट— शाक्यादीनामपि क्षत्रियत्वप्रसिद्धेः वेददर्शनसम्भवेन तत्प्रणीतस्मृतीनामपि वेदमूलकत्वं तन्मूलभूतवेदश्च इदानीं प्रलीनः । इति प्राप्ते, शिष्टैरेव शिष्टत्वेन परिगृह्य पूर्वाधिकरणोक्तयुक्तहेतोः अभावात्, प्रत्युत अप्रमाणत्वेनैव तेषां स्मरणात् वेदप्रामाण्यवादिभिरेव च तत्प्रामाण्यास्वीकारात् वेदमूलकत्वकल्पनाऽनुपपत्तेः अप्रामाण्यम् । १।३।२.

शंकर— 'शाक्यादेश्चाथ वर्णकम् । ' ( वार्तिके रचित खण्डनपरम् ) ।

* शाक्यादिशास्त्रखण्डनम् । कल्पसूत्राधिकरणस्य द्वितीयं वर्णकम् । 'शाक्यादिनिर्मिते धर्मशास्त्राभासे निराकृते । धर्मप्रयोगशास्त्रत्वं तस्य वेदमिहोच्यते ॥ येनैवाकृतकत्वं हि वेदस्य प्रतिपाद्यते । न्यायेन तेन शाक्यादिग्रन्थस्यापि भविष्यति ॥ बोधकत्वात् प्रमाणत्वं स्वतस्तस्यापि लभ्यते । न च सन्दिहते बुद्धिर्न विपर्यस्यते क्वचित् ॥ अकर्तृकतया नापि कर्तृदोषेण दुष्यति । वेदवद् बुद्धशास्त्रादिकर्तृस्मरणवर्जनात् ॥ बुद्धशास्त्रप्रमाणताऽपि प्रवक्तृत्वनिबन्धना । तद्वक्तृत्वनिमित्ता या काठकादिसमाख्यावत् ॥ यावद्देवोदितं किञ्चिद् वेदप्रामाण्यसिद्धये । तत्सर्वं बुद्धशास्त्राणामविशेषेण गम्यते ॥ तेन प्रयोगशास्त्रत्वं यथा वेदस्य सम्मतम् । तथैव बुद्धशास्त्रादेर्वक्तुं मीमांसकोऽर्हति ॥' इति ( १।३।११ ) । 'एवं प्राप्ते वदामोऽत्र तत्राऽसन्नियमादिति । अस्मन्निबन्धनं ह्येतत् पूर्वोक्तं सर्वमीक्ष्यते ॥ ईदृक्षा परमार्थेन बुद्धिरर्थेषु जायते । अन्या भ्रान्तिरजाताऽपि त्वन्या जाताऽपि दुष्यति ॥ परैस्तु सह केषाञ्चिद् वादो वाक्यानि जल्पताम् । उभयप्रातिभासिक्यो जायन्ते परवाक्यतः ॥ स्वसंवेद्यं च सिद्धान्तमात्मीयमपि जानताम् । छाया तथापि रक्षन्तो जल्पन्ति प्रतिशब्दवैः ॥

■ शाखाया तत्प्रधानत्वादुपवेषेण विभाग स्यात् वैषम्य तत् । ४।२।३।८ ॥

दर्शपूर्णमासयो 'मूलत शाखा परिवास्य उपवप करोति' इति श्रूयते । मूलत मूलात् परिवास्य छित्वा । अत्र छेदनस्य प्रयोजक शाखा उपवेषश्च उभयम्, उत शाखैव प्रयोजिका उपवेषस्तु तदनु निष्पादी इति विचारे सिद्धान्तसूत्रम् । परिवास्य इति शाखाया अन्वेति । तत्प्रधानत्वात्, शाखा इति द्वितीया श्रुत्या शाखाया प्राधान्यबोधनन परिवासनस्य शाखा प्रधानत्वात् । उपवेषेण तु परिवासनस्य विभाग स्यात् अन्वयो न स्यात्, तस्य करोतिना अन्वयात् । तत् एतत् शाखोपवेषयो वैषम्य भवति परिवासने अन्वया नन्वयतनम् । तस्मात् छेदनापरपर्यायस्य परिवासनस्य शाखा प्रयोजिका उपवेषस्तु अनुनिष्पन्न इति सिद्धान्त ।

श्रुत्यपायाच्च । ९ ॥

दर्शपूर्णमासयो 'मूलत शाखा परिवास्य उपवप करोति' इति श्रुतम् । मूलत मूलात् प्राग्देशभागे । परिवास्य छित्वा । अत्र परिवासनेन शाखाया एवा न्वय न उपवपस्य इत्युक्त सिद्धान्तिना पूर्वसूत्र । तत्र शङ्का, ननु मूलस्यापि शाखावयवत्वात् शाखाया इव प्राधान्यमस्ति इति मूलत परिवास्य इति अन्वय स्यात् इति चेन्न श्रुत्यपायात् । श्रुते अवयविन्या शाखाया वाचकस्य शाखापदस्य अन्वयात् मूलात् अपायो भवति । अवयविवाच्य अवयवे न शक्ता प्रवर्तते । ततश्च मूल शाखाशब्देन ग्रहीतु न शक्यते नापि तस्य परिवासनेनान्वय । तस्मात् शाखैव परि वासनस्य प्रयोजिका नोपवेष । उपवेषस्तु तदनु निष्पन्न । मे

● शाखासु पौर्वापर्य नास्ति । न च तत्र पौर्वा पर्यमस्ति येन शक्येत आया शाखया प्रथम विहित शाखान्तरीये पुन श्रुतिभूता भेत्स्यतीति । आह च 'शाखाना युगपद् वृत्तत्वं पुन श्रुतिरन्यथा । नहि तन्नैकश्या तत् प्रमशाध्ययन सिन्धू ॥' वा २।४।२।१६ पृ ६३८.

● शाखाध्ययनम् । स्वशाखात्यागेन परशाखाध्य यनानुपपत्त स्वशाखाध्ययनपूर्वक मेधावितया शाखान्त राध्ययन युक्तम् । सु पृ ९९०

● शाखान्तराणि (वेदस्य) । 'एकस्य वेदवृक्षस्य किंचि समस्ताश्रयात् । एव शाखा प्रतिध्यन्ति बहुत्वा नैकवृक्षवत् ॥' यदि प्रतिशाख कर्मभेद स्यात् तत एकमूलाभावात् आदित एवाऽऽरम्य भिद्यमान त्वात् समस्तकर्माऽऽश्रयपुष्पफलान्तरत्वात् वृक्षान्तरवत् वेदान्तराण्येवोच्येरन् । न शाखान्तराणि । एककर्ममूल विधिस्कन्धकल्पत्वे सति इतिकर्तव्यताया क्वचित् किंचि दधिक इत्यालोच्य शाखाप्याद्युपपन्न शाखान्तरभेद व्यपदेश । वा २।४।२।१८ पृ ६३९ ● शाखान्त राणि काठक कालापक पैप्पलादक तैत्तिरीयक ताण्डक इत्येवमादीनि । भा २।४।२।८, मैत्रायणीयकम् । २।४।२।२० ● शाखान्तराणा पुरुषान्तर प्रति प्रति पादनेन अथवत्त्वम् । वा २।२।३।१ पृ ४७५ ● शाखान्तरेऽपि हि एक शास्त्र इच्छन्ति मीमा सका । ऋजु पृ २७१

※ शाखान्तराधिकरणम् । शाखाभेदेऽपि न कर्मभेद ॥

नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्म भेद स्यात् । २।४।२।८ ॥

भाष्यम्— इह शाखान्तराणि उदाहरण काठक कालापक पैप्पलादक इत्येवमादीनि । तत्र संदेह किमेकस्या शाखाया यत् कर्म अग्निहोत्रादि श्रूयते, तत् शाखान्तरे पुन श्रूयमाण भिद्येत तस्मादुत न भिद्यत ? भिद्यतेति पश्याम । कुत ? नामभेदात् । एक काठक नाम अन्यत् कालापक नाम । एव नाम भेदाद्भेद । ननु ग्रन्थनामैतत्, सत्यम् । कर्मणामपीति ब्रूम । कर्मभिरप्येवमादीना सामानाधिकरण्यमेकविभ क्तित्व चेति । रूपभेदाच्च । एकस्या शाखायामग्नी षोमीयमेकादशकपालमामनन्ति, एकस्या द्वादशकपालम् । एव भिन्नरूप कथमिव न कर्मान्तर भविष्यति । धर्म विशेषाच्च । कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ

भोजनमाचरन्ति, अपरे शाखिनो नाऽऽचरन्ति । तथा, अग्निमधीयानाः केचिदुपाध्यायस्योदकुम्भानाहरन्ति अपरे न । अश्वमेधमधीयानाः केचिदश्वस्य घासमाहरन्ति, अपरे न । परेऽन्यं धर्ममाचरन्ति । अश्वघासादेरेकेषामुपकारं आकाङ्क्षति अश्वमेधादि, एकेषां न आकाङ्क्षति । स एवैकः कथं नाऽऽकाङ्क्षेत, कथं वाऽन्यदाकाङ्क्षितुमर्हति । अतो गम्यते अन्यदिति । पुनरुक्तिप्रसङ्गाच्च । यदि सर्वशाखाप्रत्ययं एकं कर्म, एकस्यां शाखायां विहितस्य कर्मणः शाखान्तरे वचनं पुनरुक्तमनर्थकं स्यात् । न तु भेदपक्षे एष दोषोऽस्ति । तस्मादपि कर्मभेदः । निन्दावचनाच्च । 'प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्, दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम्' इति केचिच्छाखिनोऽनुदितहोमं निन्दन्ति । अपरे पुनरुदितहोमं निन्दन्ति । यथा अतिथये प्रद्रुतायान्नमाहरेयुस्तादृक् तद् यदुदिते जुह्वति' इति सर्वशाखाप्रत्यये विरुद्धम्, न तु कर्मभेदे । तस्मादपि भेद इति । असमाप्तेश्च । न शक्नुयुः सत्स्वपि सर्वशाखाप्रत्ययमुपसंहर्तुम् । तत्रानारम्भोऽर्थो विधीयते इति प्रतिज्ञातं भवेत् । शक्यं तु कर्मभेदे । अतः कर्मभेद इति । समाप्तिवचनाच्च । असमाप्तेऽपि समाप्तिवचनं भवति । केचिदाहुः, अत्र अस्माकमग्निः परिसमाप्यते इति । अपरे अन्यत्र परिसमाप्तिं व्यपदिशन्ति । तदेककर्मत्वे नोपपद्यते । न हि तदेव तत्र परिसमाप्येत, अन्यत्र न । भेदे तु युक्तम् । तस्माद्भेदः इति । प्रायश्चित्तविधानाच्च । केचिदनुदितहोमव्यतिक्रमे प्रायश्चित्तमामनन्ति, केचिदुदितहोमव्यतिक्रमे, व्यृद्धे च प्रायश्चित्तम् । न च कर्मैकत्वे उभयथा व्यृद्धिः संभवति । कर्मभेदे तु यदनुदिते होमकर्म, तदुदिते व्यृद्धमितरदप्यनुदिते । तस्मादपि भेदः । अन्यार्थदर्शनाच्च । इदं श्रूयते— 'यदि पुरा दिदीक्षाणाः स्युर्यदि वैषां गृहपतिर्गृहपतेर्वाऽनुजावर इति, त एनमेव बृहत्सामानं क्रतुमुपेयुरुपेत येषां रथंतरम् । अथ यत्रादिदीक्षाणाः' इति ऽथंतरामनिष्टवतां च द्वादशाहे दर्शनमुपपद्यते यदि कर्मभेदः । एककर्मत्वे नावकल्पते । कथम् ? ताण्ड्यके श्रूयते 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽथान्येन यजेत गर्तपत्यमेव तज्जायेत प्र वा मीयते' इति । तत् सर्वत्र स्यात् । तत्रादिदीक्षाणां द्वादशाहे दर्शनं नोपपद्यते । तस्मादपि कर्मभेदः । अथापरं लिङ्गदर्शनम् । 'यत्पक्षसंमितां मिनुयात्कनीयांसं यज्ञक्रतुमुपेयात्कनीयसी प्रजा कनीयसः पशून् कनीयोऽस्यान्नं पापीयान् स्यात् । अथ यदि वेदिसंमितां मिनोति' इति पक्षसमाने प्रतिषिद्धे वेदिसमानस्य दर्शनं भवति । तत् कर्मभेदे उपपद्यते । पाक्षिकस्य वेदिसमानस्य दर्शनमेककर्मत्वे नोपपद्यते । कथम् ? एके हि समामनन्ति 'रथाक्षमात्राणि यूपान्तरालानि भवन्ति' इति । तत्र्यवेन स्यात् । तत्र च नो पक्षसमानं नो वेदिसमानं स्यात् । वेदिसमानदर्शनं नोपपद्यते । तस्मादपि कर्मभेदः । अपरं च लिङ्गदर्शनम् । केषांचिज्ज्योतिष्टोमे श्रूयते 'द्वे संस्तुतानां विराजमतिरिच्येते' इति । परेषां तिस्रः संस्तुतानां विराजमतिरिच्यन्ते इति । एककर्मत्वे विरोधः । नानाकर्मत्वे कस्मिंश्चिज्ज्योतिष्टोमे द्वे, कस्मिंश्चित्तिस्रः । तस्मात् कर्मभेद इति । अपि च सारस्वते श्रूयते 'ये पुरोडाशिनस्ते उपवसन्ति । ये सान्नाय्यिनस्ते वत्सान् वारयन्ति' । सान्नाय्यिन उपप्रथमपक्षाः । पुरोडाशिनो विपरीताः । उभयेषां सारस्वते दर्शनमवकल्पते कर्मभेदे । एककर्मत्वे सर्वेषां ज्योतिष्टोमपूर्वत्वं स्यात् । तत्र दर्शनं नोपपद्यते । अपि च श्रूयते 'उपहव्योऽनिरुक्तोऽग्निष्टोमो यज्ञः, रथंतरसामाऽश्वः श्यावो दक्षिणा । परेषां श्रूयते । उपहव्योऽनिरुक्त उक्थ्यो यज्ञो बृहत्सामाऽश्वः श्वेतो रुक्मललाटो दक्षिणा' इति । कर्मैकत्वे रथंतरवचनं बृहद्वचनं चानर्थकम् । शाखाद्वयप्रत्ययत्वात् । बृहत्साम्ना रथंतरसाम्ना वा स्यात् । स चायं प्रकृतितः एवंलक्षणकः प्राप्तः । नानाकर्मत्वे तु अन्यो बृहत्सामाऽन्यो रथंतरसामेति युक्तं भवति । तस्माच्छाखान्तरे कर्मभेदो भवितुमर्हति ।

वा— उक्तभेदकारणषट्कव्यतिरिक्तकारणनिरासपरत्वार्थमिदमारभ्यते । तत्र कानिचित्केनचिद्रूपान्तरेणाऽऽशङ्क्य प्रतिषिध्यन्ते । तत्तु प्रत्युदाहरणं प्रतिविधित्सतो

योजयिष्यामः । कथं पुनरत्र वेदान्तराणि नोदाह्रियन्ते ? केचिदाहुः । शाखान्तरशब्देन तान्यप्युदाहृतानीति । न त्वेतद्युक्तम् । कुतः ? 'शाखान्तरे यथा कर्म कृत्स्नरूपं प्रतीयते । किंचिद्गुणसमाम्नानान्नैवं वेदान्तरेषु तत् ॥' यत्र हि कर्म निराकाङ्क्षमाम्नायते तत्र तद्भेदप्रतिपत्तिक्षमं भवति । यथा सर्वास्वध्वर्युशाखासु दर्शपूर्णमासज्योतिष्टोमादीनि समस्तद्रव्यदेवतादियुक्तत्वादन्योन्यनिरपेक्षाणि विधीयन्ते इति भेदाशङ्कां सहन्ते न त्वेवं वेदान्तरेऽपि । तत्र हि द्रव्यदेवतारहितं कर्ममात्रं प्रस्तुत्य स्तोत्रशस्त्रयाज्यानुवाक्यादिमात्रं विधीयते । न च तावताऽस्य नैराकाङ्क्ष्यं भवति । इष्टार्थानामेव द्रव्यदेवतातत्संस्काराणामभावात् । यत्तु तत्र द्रव्यदेवतायुक्तमाम्नायते तस्याऽऽध्वर्यवे गुणमात्रविधानात् साकाङ्क्षत्वम् । तथा च वक्ष्यति 'भूयस्त्वेनोभयश्रुति' ( अ. ३ पा. ३ अ. ३ सू. १० ) इति । तस्मात् शाखान्तराण्येवोदाहरणम् । तत्र च नामभेदस्तावत्कारणं दृश्यते । तद्यथा— काठकेऽग्निहोत्रे तैत्तिरीयेऽग्निहोत्रे इह पठ्यते इत्यादि । तथा रूपभेदे एकादशकपालत्वादि । वैश्वानरद्वादशकपालत्वाद्विषदामिक्षावाजिनवच्च न द्वादशैकादशत्वयोरितरेतरसंक्रान्तिरुपपद्यते इति गुण एव भेत्ता । कारीर्यश्वमेधेष्वपि भूमिभोजनोदकुम्भाश्वघासा गुणा एव सन्त इतिकर्तव्यतास्थानीयत्वेन बाह्यतरत्वात् पूर्वस्मात् भेदेनोपात्ताः । 'परेऽस्य धर्ममाचरन्ति' इति विरोधिगुणान्तरप्रदर्शनार्थम् । 'अश्वघासादेः' इति पञ्चम्यन्तं मध्ये पठितमुभाभ्यां सह सम्बध्यते । पूर्वेण तावदश्वघासादेरन्यमुत्तरेणाप्यश्वघासादेर्निष्पन्नमुपकारमाकाङ्क्षन्त्यश्वमेधादिरिति । पुनरुक्तत्वेन पुनः श्रुतिर्भेदिकोक्ता । निन्दाया अपि उदितानुदितकालसंयोगभेदात् गुण एव भेदकः । उदितहोमवादिनो ह्यनुदितहोमं निन्दन्ति अनृतवादित्वेन । 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' इति ह्यनुदिते सूर्येऽभिधीयमानमनृतं जायते । तस्मादुदितहोमः कर्तव्यः इति । इतरे पुनराहुः, यः पूज्यः पूज्याय प्रथममेव गृहीत्वोत्तिष्ठते स साधुः । यस्त्वतिक्रान्तं व्याहृत्य पूजयति नासौ सम्यक्पूजकः । तस्मात् अनुदितहोम एव कर्तव्य इति । तत्रैकत्वे विप्रतिषिद्धधर्मसमवायप्रसङ्गः । नानात्वे तु न कश्चिद्विरोधः । अशक्तिद्वारेणापि गुण एवोपन्यस्तः शाखान्तरीयाणां गुणानामेककर्मण्युपसंहाराशक्तेरपूर्वसंयोगः । समाप्तिभेदोऽपि गुण एव । निन्दया गतार्थोऽपि सन् प्रायश्चित्तभेदः पुनरुपन्यस्यते । कदाचिदत्र वैकल्पिकत्वपरिहारं ब्रूयात्तत्रमभ्युपेत्योच्यते । वैकल्पिकेषु ह्युभयथाऽप्यवैगुण्यं भवति । अत्र च प्रायश्चित्तविधानादुभयत्रापि वैगुण्यं दृश्यते । न च तदेककर्मत्वे घटते । तस्मादपि भेदः । परिहारसूत्रशेषेण पञ्चान्यार्थदर्शनान्युच्यन्ते । यदि पुरा दीक्षितवन्तस्ततो बृहत्सामानमतिरात्रमुपेयुः । पूर्वदीक्षया रथन्तरस्य प्रयुक्तत्वात् । अथ न दीक्षितवन्तस्ततो रथन्तरसामानमेवोपेयुरिति । द्वादशाहेऽग्निष्टप्रथमयज्ञत्वं कर्मभेदे भवति । ताण्डकवचनेन ज्योतिष्टोमान्तरस्य प्राथम्यनियमे सति एतच्छाखागतस्यानियमात् । एकत्वे तु सर्वशाखास्थज्योतिष्टोमप्राथम्यनियमाददीक्षितानां दर्शनं न स्यात् । तथा यूपैकादशिन्यां पशुवेदिसमानयोरर्थप्राप्तयोरेकं निन्दित्वेतरपरिग्रहो वचनान्तरप्राप्त्यसत्त्वं द्योतयति । वचनान्तरे हि किमेकस्य निन्दया, किं वेतरस्य स्फुटविधाने सति स्तुत्या । तस्मान्नूनं शाखान्तरीयो रथाक्षमात्रान्तरालविधिरेषां नास्ति । ततश्च कर्मभेद इति । द्वे स्तोत्रीये विराजं दशाकमतिरिच्येते इति तिस्रोऽतिरिच्यन्ते इति च ज्योतिष्टोमातिरात्रैकत्वे सति उपपन्नम् । भेदे तु यथाविधि भवतीत्यविरोधः । पुरोडाशिमानाद्यपि दर्शनं दीक्षितादीक्षितसंदर्शनेनैव गतं परिहारप्रकारान्तरत्वादुदाहृतम् । किञ्च 'बृहद्रथविकल्पः स्याच्छाखान्तरविधानतः । स च प्रकृतितः प्राप्तः कर्मैकत्वे वृथा भवेत् ॥' उपहव्यभेदे तु नियमार्थाया पुनःश्रुतावर्थवत्ता । तस्मादपि कर्मभेदः ।

एकं वा संयोगरूपचोदनाख्याविशेषात् ।९॥

भाष्यम्— न चैतदस्ति, यदुक्तम् 'शाखान्तरेषु कर्मभेदः' इति । सर्वशाखाप्रत्ययं सर्वब्राह्मणप्रत्ययं चैकं कर्म । अर्थसंयोगस्याविशेषात् । तदेव प्रयोजनमुद्दिश्य तदेव विधीयमानं प्रत्यभिजानीमः । रूपमप्यस्य तदेव द्रव्यदेवतम् । पुरुषप्रयत्नश्च तादृश एव चोद्यते । नाम-

अनुपपन्न । किंच– ' सम्प्रदायागता मुक्त्वा स्वां समाख्यानिबन्धिनीम् । शाखां शाखान्तरं युक्तं नाध्येतुं सदृशो श्रमे ॥ ' तस्मात्परकीयशाखाध्ययने अप्यस्यैव पुरुषाणां श्रम इति यथावस्थितशाखाध्ययन मेव । न च वेद पुनरुक्तादिदोषपरिहारं पर्यनुयोगमर्हति ।

वाक्यासमवायात् । १७ ॥

वा— अनन्तरं भाष्यकारस्य सूत्रं प्रथमं ' वाक्यासमवायात् ' इति । तदेव व्याख्येयम् । नैकस्मिन्पुरुषे शाखान्तरवाक्यं समवैति ।

अर्थासंनिधेश्च । १८ ॥

भाष्यम्— अर्थासंनिधेश्च शाखाशब्द उपपन्नो भविष्यति । शाखा इव हीमाः शाखाः । तद्यथा वृक्षस्य शाखाः, एवमिहापि वृक्षस्थानीयस्य वेदस्य शाखाः । किं शाखासारूप्यम् ? यथा नानास्थानम् । न चैकस्यां वृक्षस्य पुष्पं फलं संनिहितम् । एवमिहापि, नैकस्यां वृक्षस्य गुणकाण्डं संनिहितमित्यर्थासंनिधेः शाखाशब्दोपपत्तिः । तस्मादप्येकं कर्मेति ।

वा— ' एकस्य वेदवृक्षस्य निश्चितकर्मफलाश्रयात् । एवं शाखाः प्रतीयन्ते यद्वृक्षाग्रैकवृक्षवत् ॥ ' यदि प्रतिशाखं कर्मभेदः स्यात्तत एकमूलशाखाशादितः एकाऽऽश्रयस्य विद्यमानत्वात् समस्तकर्मान्यपुष्पफलान्तरवत् वृक्षान्तरवद्वेदान्तराण्येवोच्येरन् । न शाखाख्यानि । एककर्ममूलविधिस्कन्धस्थे सतीतिकर्तव्यताशाखा क्वचित्क्वचिन्निबद्धेत्यालोच्य सारूप्यादुपपन्नं शाखान्तरभेदव्यपदेशः । अथवा पौनरुक्त्यपरिहारार्थमेव सूत्रम् । तत्र नाम पुनरुक्तता भवति यत्र पूर्वांशोऽर्थस्तस्यैव पुनः संनिहितो भवति । न त्विह शाखान्तरगतस्य संनिधानमित्यपुनरुक्तता ।

न चैकं प्रति शिष्यते । १९ ॥

भाष्यम्— न च यत्काठकेऽग्निहोत्रं तत्काठकमेव पुरुषं प्रति विधीयते । तैत्तिरीयस्यापि तद्विहितमेव । पुरुषविशेषवचनाभावात् । यश्च अग्निहोत्रस्य विनियोगः विधीयते, सर्वार्थत्वस्य तदग्निहोत्रस्य । यश्च काठकस्याग्निहोत्रस्य तच्च तैत्तिरीयकस्येति । विशेष वचनाभावात् । तस्मात्सर्वशाखाभिरेकं समानं कर्मोच्यते इति ।

वा— अभ्युपेत्यवादोऽयम् । यद्यपि कर्मभेदे ये तावद्वाक्यप्रयुक्ता दोषास्तेऽग्निहोत्रादिनामादर्शनेन विधीयमानाः सर्वार्थत्वेन ज्ञायन्ते इत्यनर्थकोऽनादातव्या इति नैव शाखामात्रपरितोषव्यवस्था लभ्यते । न च सूत्रकारायमपि कश्चित् स्वशाखोपसंहारमात्रेणावस्थितो येन प्रतिशाखं कर्मव्यवस्थां समर्थयेत । प्रधानत्वेऽपि प्राधान्येन यजमाननियमं प्रति, अप्रमत्तश्रीभिः समाख्याभिरर्थिमात्रमुद्दिश्य विधीयमानानि सर्वशाखागतान्येकैकपुरुषमुपतिष्ठन्ते । तत्रैकदेशावस्थानमुपदर्श्य येन केनचित्साध्यमाने फलेऽन्येषां वैयर्थ्यप्रसङ्गः । अथ तेषां विकल्पेनार्थवत्त्वम्, तद्वत् शाखान्तराणामेव व्यवस्थितमनिष्पन्नमानानामनतुल्यत्वं परिकल्पितमित्यपुनरुक्तता ।

समाप्तिवच्च सम्प्रेक्षा । २० ॥

भाष्यम्— अत्र अस्माकमपि परिसमाप्यते इत्युपक्षितारो भवन्ति । अन्वारोहेषु मैत्रायणीयानामपि परिसमाप्यते, अस्माकं तेषु न परिसमाप्यते इति । यत्र यदेव मैत्रायणीयानामेव तेषाम्, कथं ते ब्रूयुरेभ्यस्माकं न परिसमाप्यते इति । एवमनुपपन्नम्, तेषामपि हि ते सन्ति ।

वा— असमाप्तिवदिति वा छेदः । कर्मभेदपक्षे हि हि यावदेव यथा समाम्नातं तावदेव तेषां समाप्यते इति न ब्रूयुरस्माकं न समाप्यते इति । अन्वारोहो नाम अन्वारोहणमन्त्राः । तेषु मैत्रायणीयानां समाप्यन्ते न अस्माकमित्यभिधानादध्येतॄणामपि कर्मैकत्वं प्रसिद्धमित्यवसीयते ।

एकत्वेऽपि पराणि निन्दाऽशक्तिसमाप्तिवचनानि । २१ ॥

भाष्यम्— न हि निन्दा निन्द्यं निन्दितुं प्रयुज्यते । किं तर्हि ? निन्दितादितरत्प्रशंसितुम् । तत्र न निन्दितस्य प्रतिषेधो गम्यते, किं त्वितरस्य विधिः । तत्र एकस्मिन् अग्निहोत्रे द्वौ कालौ विहितौ विकल्प्येते । अतो न कश्चिद्विरोधः ।

कर्मणा विप्रतिषिद्धमेतदिति । तेन यदा सानाय्यिन ( यदा सानाय्यिन इति । अयमाशय — मित्रावरुणयोरयनाख्ये सारस्वतसत्रे ' यथाऽमावास्यायामतिरात्र स्यात्तथा दीक्षेरन् । तेऽमावास्यायामतिरात्र सस्थाप्य तद्हरेव वत्सानपाकुर्युः । त पक्षममावास्येन प्रजित्वा पौर्णमास्या गामुपेयु । पौर्णमासेनोत्तर प्रजित्वाऽमावास्यायामुपयुपेयु । एवमावर्तयन्तो प्रजेयु ' इत्यनेन वाक्येन प्रतिमासमेकैकस्मिन्पक्षे पौर्णमास्यमावास्याख्यकर्मविधानात्पुरोडाशिशब्द पौर्णमास्याख्यकर्मोपयोगि पशूपलक्षणार्थे । सानाय्यिशब्दश्चामावास्याख्यकर्मोपयोगिपशूपलक्षणार्थे इत्येव पक्षद्वयेऽपि वक्तव्यमिति । ) इति कल्प्यते ।

वा — सारस्वते हि द्वादशाहन्यायेनैरोभयो पक्षयोर्ज्योतिष्टोमपूर्वकत्वाद्वक्तव्यमेव वक्तव्यम् । यदा पुरोडाशिन पौर्णमासीपक्षे तदोपवसन्ति, यदा सानाय्यिनो ऽमावास्यापक्षे तदा वत्सानपाकुर्वन्तीति । भवति हि कालभेदादपि कर्तृभेदोपचारस्तस्माददोष ।

उपहव्ये प्रतिप्रसव । २९ ॥

भाष्यम्-- अथ यदुक्तम्, उपहव्ये बृहद्रथतरविधान प्रकृतिप्राप्तमेव । एककर्मत्वे प्रतिप्रसवतश्चाप्य संमतादिष्टीयमानमनर्थक स्यादिति । तत्परिहर्तव्यम् । आह यात्र सूत्रम् ।

वा-- अनुभाषण सामा परिहारो वा ।

गुणार्था वा पुन श्रुति । ३० ॥

भाष्यम्-- यदा रथन्तरसामा तदा, अश्व श्वेतो दक्षिणा, यदा बृहत्सामा तदा श्वमल्लाट इति ।

वा - संभाव्यमानयो वा बृहद्रथतरयो पुन श्रुति भविष्यति ।

प्रत्यय चापि दर्शयति । ३१ ॥

भाष्यम्— यदा न सर्वशाखाप्रत्ययमेक कर्मेति कथमेकस्यां शाखायां समाम्नायते अन्यस्या गुणो विधीयत । यथा मैत्रायणीयाना अग्निहोत्र प्रयाजा न समाम्नायन्ते । अथ च गुणा श्रूयन्त— ऋतवो वै प्रयाजा समानीय होतव्या ' इति । तथा यथा शाक्तिनाम्, कुटरासि, इत्यश्म दानमन्त्रो नाऽऽम्नात्यन्तेषामपि हि दृश्यते— ' कुक्कुटोऽसीत्यश्मानमुपादत्ते, कुटरुरसीति वा ' इति । तस्मादेक कर्मेति प्रतीम ।

वा-- शाखान्तरविहितप्रयाजानुवादेन सह होम वदन् अन्यशाखाधीत च ' कुटरुरसि ' इति मन्त्रमश्मादाने विदधत्सर्वशाखाप्रत्ययत्व दर्शयति ।

अपि वा क्रमसयोगाद्विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत । ३२ ॥

भाष्यम्-- यो ह्यन्यशाखायामवस्थितान् विधीनुपसहरति, स स्वशाखाविहित क्रममुपरुणद्धीति । तेन शाखान्तरेषु कर्मभेद इति ।

वा-- प्रतिशाख वा विधिपृथक्त्व व्यवतिष्ठेत । तथा सति हि क्रमभेद न यास्यन्ति स्वशाखाविहिता क्रिया । परिमाण च तद्वति नान्यत्र प्रतिपत्स्यते ।

विरोधिना त्वसयोगादैककर्म्ये तत्सयोगाद्विधीना सर्वकर्मप्रत्यय: स्यात् । ३३ ॥

भाष्यम् - उच्यते । नैव शाखान्तरविहितानामेककर्म्ये सति विरोधिना सयोग । न हि क्रमो वाक्येन विरुध्यते । दुर्बलो हि क्रम । बलवद्वाक्यम् । वाक्येन च शाखान्तरीयाणामुपसहार । तस्मात् सर्वशाखाप्रत्यय सर्वब्राह्मणप्रत्यय चैक कर्म चोद्यते इति सिद्ध भवति ।

वा - यत्र स्मार्ता पदार्था न क्रमस्तत्परिमाणानुरोधेन बाधितास्तत्र श्रौता बाधिष्यन्ते इति कुत एतत् । तेनैव ( विरोधाधिकरणेनैव ) गतत्वादवाच्यमिति चेन्न । सूत्रकारस्यैव प्रथमाभिधानात् तत्र हि कारणाग्रहणमात्रमुपपत्तिरुक्ता । शेष त्विह सिद्धमनूदितमित्युक्तम् । ' तस्मात्तद्देवेति मते न कर्म भिन्नं कथंचित्प्रतिशाखमिष्टम् । न कारण सप्रमाणमस्ति कान्यदतो ययोर्हि तु भेदसिद्धि ॥ '

शा-- शाखान्तरेषु किं अग्निहोत्रादि कर्म भिद्यते किंवा सर्वशाखासु एकमेवेति विचार । तत्र अविशेषेण पुन श्रुतिलिङ्गात् अध्ययनात् दूरनाम्नाय प्रकरणान्तरात् भेद , तथा गुणादपि क्वचित् ' ऐन्द्राग्नेकादशकपाल निर्वपेत् ' इति श्रुत क्वचित् द्वादशकपालमिति । तत्र अदृष्टमयत्नेन कर्म उत्पादयितव्यम्,

येन च उत्पादितं तद्गतो गुणः उत्पत्तिशिष्ट इति, इतरस्तु निवेशमलभमानो वाजिनवत् कर्मान्तरं कल्पयति ? इति प्राप्ते, ब्रूमः । 'विधेः कर्मार्थतामात्रं पुनःश्रुत्यादिभिर्भवेत् । तावन्मात्रमिहापि स्यान्न तु भेदः प्रसिध्यति ॥' पुनःश्रुत्या हि कर्म विधेय इत्येतावत् सिध्यति, विधित्वात्तु भेदो विहितस्य विधानायोगात्, एवमवनिधावपि निपरिशुद्धभावात् कर्मविधानम्, विधानाच्च भेदः तदिहापि कर्मविधिः पुनःश्रुत्यादिना सिध्येत् न स्वत विधित्वाद्भेदसिद्धिः, विहितस्यापि पुरुषान्तरं प्रति विधिसम्भवात् । यथा खलु एकशाखागतमग्निहोत्रादिवाक्यमेकस्य पुरुषस्य विहितमेव अपरस्यापि विधत्ते न कर्मान्तरं एव अन्यापि अध्येतृभेदात् तान् प्रति सर्वाण्येव वाक्यानि एकमेव कर्म विदधति न कर्मान्तरम् । एवमेकादशद्वादशकपालयोरुभयोरुत्पत्तिशिष्टत्वात् बलाबलम्, तस्मादभेदः ।

सोम-- अधीयते इति अध्यायः, स्वश्चासौ अध्यायश्च स्वाध्यायः । स्वत्वं च पितृपितामहादिपरम्परागतत्वम् । ततश्च 'स्वाध्यायोऽध्येतव्यः' इति स्वीयशाखाध्ययनमात्रमेव विधीयते स्वाध्यायस्य अध्ययनसंस्कार्यस्यापि अर्थज्ञानं प्रति उपादेयत्वेन तत्र स्वत्वस्य एकत्वस्य च विवक्षितत्वादेव चैकस्य पुरुषस्य एकशाखाध्यायित्वात् तत्तच्छाखागतविधीनां तत्तदध्यायिपुरुषान् प्रति अज्ञातज्ञापकत्वेन अर्थवत्त्वात् एकस्यैव पुनःश्रुतिः अविरोधात् अनर्थकं हि स्यादिति न्यायप्राप्त्या न भेद इत्यर्थः । न चैव वेदान्तराध्ययनमपि न स्यादिति वाच्यम् । 'वेदानधीत्य' इत्यादिशास्त्रेण वेदेषु समुच्चयागमात् ।

वि-- 'शाखाभेदात्कर्मभेदो न वा कर्माऽत्र भिद्यते । इह पाठकनामादि यद्वद्भेदस्य कारणम् ॥ मा पदत्वादिना कर्म युज्यन्ते भेदहेतवः । रूपादिप्रत्यभिज्ञानादभिन्नं कर्म गम्यते ॥'

भाट्ट-- अग्निहोत्रादौ सत्स्वपि भेदकप्रमाणेषु न कर्मभेदः । भेदकप्रमाणैर्हि स्वसंबन्धस्य कर्मोत्पत्तिपरत्वावगतेरुत्पत्त्यैवोत्पत्तिरोधात् कर्मान्तरत्वसिद्धिः । प्रकृते तु तत्प्रमाणैरुत्पत्तिपरत्वासंभवेऽपि पुरुषभेदात् तत्तच्छाखाध्यायिपुरुषान् प्रत्येकस्यैव कर्मणः सर्वत्रोत्पत्तिसम्भवात् न कर्मभेदः । न हि सर्वशाखाः सर्वपुरुषैरध्येयाः, स्वाध्यायविधौ 'अध्वर्युं वृणीते' इतिवत् स्वीयत्वैकत्वयोर्विवक्षितत्वेन अनेकशाखाध्ययनानुपपत्तेः । न चैवं वेदान्तरस्वशाखाध्ययनस्याप्राप्तिः । 'वेदानधीत्य' इत्यादिवचनान्तरानुरोधेन वेदत्रयगतैकैकशाखाध्ययनस्यैवावश्यकत्वावगतेः । अत एव वेदभेदे पुरुषाभेदादेककर्मोत्पत्तिपरत्वं गुणार्थं भवतीत्येव निरामकं वक्ष्यते । वेदैकत्वे तु प्रतिशाखं पुरुषभेदात् सत्यपि सर्वेषामुत्पत्तिपरत्वे न कर्मभेदः । अत एवैकस्मिन् कर्मणि विरुद्धाना नानाशाखागताङ्गानां विकल्पः । [illegible] च न तत्तत्पुरुषभेदेन व्यवस्थितः । तत्तदङ्गानां तत्तदध्येत्रर्थत्वे प्रमाणाभावेन प्रकरणाच्छुद्धक्रत्वर्थत्वावगतेः । अविरुद्धाङ्गेषु तु समुच्चयः । शाखान्तरीयाङ्गज्ञानं च कल्पसूत्रादिभिः सुलभम् । यत्तु 'बह्वल्पं वा स्वगृह्योक्तम्' इत्यादिवचनं तत् सर्वाङ्गोपसंहारासंभवे अनुकल्पविधानार्थमिति कौस्तुभे द्रष्टव्यम् ।

तदेवं शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तरैः निरूपितः कर्मणां भेदः । अतः परं तेषां विनियोगो निरूपयिष्यते ।

मण्डन-- 'मुनिरपि बहुशाखं कर्म चैकं जगाद ।'

शंकर-- 'शाखाभेदे न कर्मभित् ।'

● शाखान्तराधिकरणे ( २।४।२।८-३३ ) तत्तच्छाखाध्यायिनं प्रति स्वस्वशाखाध्ययनप्राथम्येन अज्ञातज्ञापकत्वं समर्थितम् । रसायनम् पृ. ३७. ● शाखान्तराधिकरणे स्वशाखाविहिताङ्गमात्रोपसंहारः पूर्वपक्षप्रयोजनम्, सर्वशाखाविहिताङ्गोपसंहारश्च सिद्धान्तप्रयोजनम् । सु. पृ ९९२, ● 'प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्' इत्यनुदितहोमनिन्दात्वेन भासमानमपि तस्मात् 'उदिते होतव्य' इति विध्येकवाक्यत्वात् स्तुतिरेव इति शाखान्तराधिकरणे भाष्यकारो वक्ष्यति । पृ.३८. ● यथैव वैदिकत्वाविशेषेऽपि सौम्यचरुत्वमात्रेण प्रयोगविधिपरिमाणात्मावश्यकत्वम्, वस्तुपूर्वस्य अनिर्ज्ञातोपायपरिमाणत्वेन श्रोतव्यत्वेन नैराकाङ्क्ष्यायोगात् । किन्तु समाख्यादि.

दुर्बलप्रमाणक – अनारभ्याधीतशाखान्तरविहितयावदुक्त-कल्पपरत्वोत्तरप्रयोगविधिसमवश्यक्षीकारेणेव तत् इति शाखान्तराधिकरणे वक्ष्यते। कौ १।२।३।७ ● शाखा-न्तरीययो उदितानुदितहोमयो ऐन्द्राग्नैकादशकपाल-द्वादशकपालयो समविकल्प यजमानं प्रति इति शाखा-न्तराधिकरणे वार्तिकम्, न स्वमतं किंतु परमतम्। बाल पृ ९१. ● स्वरूपस्यापि सामान्यवचनस्य यत्र नान-र्थक्य तत्र विशेषोपसंहाराभ्युपगमात् न दोष। प्रकृते च सामान्यवचनस्य शाखान्तरीयत्वात् नानर्थक्यम्। अन्यथा नानाशाखागताग्निहोत्रादिविधिवाक्येषु का गति। यथा चैतत्तथा शाखान्तराधिकरणे 'अद्विर्वचन वा०' इत्यादिसूत्रमूनी व्याख्यानावसरे भाष्यवार्तिकयो प्रपञ्चित स्पष्टीकृत चास्माभि। कु ३।१।१५।२७.

● शाखान्तराधिकरणनिष्कर्षनिरूपणम्। शाखान्तराधिकरणवार्तिके उदितानुदितहोमयो. तथा ऐन्द्राग्नैकादशकपाल–द्वादशकपालयो शाखान्तरीययो समविकल्प सर्वान् प्रति इत्युक्तम् (२।४।२)। तत्परमत न स्वमतम्, श्रुतिलिङ्गाधिकरणे अनेकविध बाधनिरूपणे स्वयमेव वार्तिककृता परशाखाविहित स्वशाखाविहितेन बाध्यते इत्युक्तम्। युक्त चैतत्। स्वशाखाविहितज्ञानस्य स्वाध्यायाध्ययनजनितस्य कर्माङ्ग त्वात् तत्संभवे इतरस्यानाक्षेपात्। स्वशाखाविहित विरुद्धवैकल्पिकानुष्ठानेनापि च साद्गुण्यसंभवात्। स्वशाखाऽविहितविरुद्धवैकल्पिकस्य ज्ञान शाखा-न्तराध्ययनजनितमपि कर्मणा साद्गुण्याय आक्षिप्यते एव। एतन्न्यायमूलकमेवेद भविष्यत्पुराणवचन 'यन्ना-म्नात स्वशाखाया पारक्यमविरोधि यत्। विद्वद्भिस्त दनुष्ठेयमग्निहोत्रादिक यथा॥' इति। बाल पृ ९१

● शाखान्तराधिकरणन्यायेन शाखागतपार्वण स्थालीपाकाद्यभेदेऽपि पूर्वपक्षे तदङ्गेषु विधिपाठव्यवस्थया व्यवस्थितमुपसंहरणस्य पुरुषार्थेष्वि अवश्यनीयत्वात् न्यायसुधोक्तमयुक्तम्। कौ १।३।७।१५. ● ('अग्नि मुखे मेघपतिभ्या मेघातय' इत्यत्र) न तावदत्र शाखाभेदेन मन्त्रभेद एकदर्शैकमुपप्येऽपि शाखान्तरा-धिकरणन्यायेन प्रत्यभिज्ञानेन तदेकत्वावगते। भाट्ट. ५।३।१२.

● शाखान्तराधिकरणसमाप्तौ 'अपि वा क्रम संयोगात् विधिपृथक्त्वमेकस्या व्यवतिष्ठेत' (२।४।२।३२) इति सूत्रेण क्रमकालपरिमाणविरोधात् शाखा-न्तरीयपदार्थानुपसंहारमाशङ्क्य 'विरोधेनार्थसंयोगा-देककर्म्ये तत्संयोगाद् विधीना सर्वप्रत्यय' ('विरोधिना त्वसयोगादेककर्म्ये तसंयोगात् विधीनां सर्वकर्मप्रत्ययः स्यात्' इति भा-पाठ) इति सूत्रेण पदार्थाना क्रमादि बाधकत्व वक्ष्यते। सु पृ. १७८.

● शाखान्तराधिकरणसिद्धसर्वाङ्गोपसंहारानुकल्प विधि 'बहल्प वा स्वगृह्योक्त यस्य यावत् प्रचो दितम्। तस्य तावति शास्त्रार्थे कृते सर्वं कृतो भवेत्॥' इति। अत्र गृह्यसूत्रस्य स्वशब्देन विशेषणात् पारम्पर्या गत–एकगृह्यसूत्राध्ययन–नियमप्रतीते.। कौ. १।३।६।१२.

● शाखान्तराध्ययन तावदेकस्य पुंसो नैवेष्यते। किं कारणम्? 'स्वाध्यायग्रहणे नैका शाखा हि परि-गृह्यते' यथैव आकृति प्रतिव्यक्ति समवैति तथैव स्वाध्यायत्व एकैकस्या शाखायाम्। अतश्च 'स्वाध्यायो ऽध्येतव्य' इति कर्मावबोधन प्रति उपादीयमानत्वात् विवक्षितैकत्वैव शाखाऽध्येतव्या। ननु एव वेदा न्तरस्यापि अध्ययन न प्रसज्यते। न। वचनान्तरेण प्रतिप्रसवात्। 'अनया त्रय्या विद्यया' इति। तथा 'वेदानधीत्य वेदौ वा' इति मानवम्। साकाङ्क्षत्वाच्च वेदान्तराणामतुल्यकार्यत्वकारित समुच्चय अवगम्यते। साकाङ्क्षत्वादेव च एकशाखागतब्राह्मणान्तरसमुच्चया श्रयणम्। वा २।४।२।१९। न हि कश्चित् द्वे शाखे अधीते। 'संप्रदायागता मुक्त्वा स्वा समाख्यानिब-न्धिनीम्। शाखा शाखान्तर युक्त नाध्येतु सदसि श्रमे॥' इति यथाव्यवस्थितशाखाध्ययनमेव। २।४।२।१६। (अत्र सूत्र) 'वाक्यासमवायात्'। नैकस्मिन् पुरुषे शाखान्तरवाक्य समवैति। २।४।२।१७.

● शाखान्तरोच्छेद। 'न च शाखान्तरोच्छेद कदाचिदपि विद्यते। प्रागुक्ताद् वेदनित्यत्वात् चैषां दृष्टमूलता॥' वा. १।३।२।८ पृ १९५.

योऽनुष्ठाने विशेषः । उभयथाऽपि स्थाल्या पक्वस्य हविष्ट्वात् इत्याशङ्कय (अग्निमापिकरणेन प्रयोजनमुच्यते इति शेषः ) ।

सोम— पुरोडाशकार्ये चरोरिव कपालकार्ये अन्यस्याविधानात् न तन्निवृत्तिः इत्युच्यते. संगतिः । सूत्रार्थस्तु— स पाकः प्रकृतिप्राप्त्या कपाले एव स्यात् इति ।

वि— 'चरु. कपाले पक्तव्य. क्वापि याऽप्युचितेऽपया । , कपाले चोदकप्राप्तेस्तत्पूर्वत्वतः क्वचित् ॥ , स्थाल्या चरुत्वयोग्यत्वात् कटाहे योग्यता नहि । चिन्ताद्वयफल त्वत्र पेषणादिनिवर्तनम् ॥ पेषणं यजनं वापस्तापश्चोपहितिः प्रथा । मार्जनाभ्यूहनज्वालास्तथा प्युद्वासनम् ॥ एतानि मन्दमतस्य कर्तव्यानीति विभ्रमः । अपूपस्यैव योग्यानीत्येतत् सूत्रैर्निरूपितम् ॥'

भाट्टमतस्तु पूर्वाधिकरणे एव गतः । स च 'चरुशब्दवाच्येनौदनेन प्राकृतहविषो बाध.' (मीको. पृ. १६८४ ) इत्यत्र द्रष्टव्यः ।

मण्डन— 'स्थाल्या चरौ. पाकविधिं प्रकुर्यात् ।' ११.

शंकर— 'सौर्ये बाध कपालानाम् ।' १३.

'पेषणादि च बाध्यते ।' १४.

● सौर्ययागे चरुशब्दवाच्येनौदनेन प्राकृतहविषो बाधः । १०।१।१०।३६–४६. मीको. पृ. १६८४ 'चरुशब्दवाच्येनौदनेन सौर्ययागे०' इत्यत्र अधिकरण द्रष्टव्यम् ।

● सौवर्णराजताभ्यां अश्वमेधोक्तदिष्टमहिम्ना अतिदिष्टस्य ग्रहण समुच्चयः । मीको. पृ. १६४८ 'महिमसमुच्चयन्याय.' इत्यत्र अधिकरण द्रष्टव्यम् ।

● सौविष्टकृतैः अवदाने सौविष्टकृतानां ( दैवते दैवतानां, ऐडैश्च ऐडानां ) एकदेवताकपशुयागे अनुसमयः, प्राजापत्ये प्राजापत्यपशु[1] । भा. ५।२।३।१०–१२.

● सौविष्टकृतञ्यङ्गेषु हविःशब्दाभिधानं नास्त्येव । संकर्ष. २।२।१७.

● स्कन्दनादिनिमित्तकहोमानां दर्शपूर्णमासमात्रसङ्गता । ६।५।१५।४५–४७. मीको. पृ. २०६९ 'दर्शपूर्णमासाङ्ग भेदनादिनिमित्तकहोमा.' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● स्कन्दनभेदनादौ एकदेशस्य जातेऽपि प्रायश्चित्त दर्शपूर्णमासयोः । ६।४।४।१०–१६. मीको. पृ. २०३९ 'दर्शपूर्णमासयोः कपालादेः एकदेश०' इत्यत्र अधिकरण द्रष्टव्यम् ।

● स्कन्दनहोमादीनां स्कन्दनादिनिमित्तत्वात् न विकल्पः । किंतु समुच्चय. 'स्कन्ने जुहोति' 'भिन्ने जुहोति' इति । नि. १२।३।६.

● स्कन्धघनशब्दः बौद्धपरिभाषया विज्ञानस्कन्धमात्रपर. । मेघनाथः । १।१।५।५ पृ. ६५.

● स्कन्धोग्रीवी बृहती । पादेषु अक्षराणि ८।१२।८।८ । उदा० 'ईशानमिद्' ( ऋग. १०।१३२।१)। के.

● 'स्कन्ने जुहोति' इति श्रूयते । तत्र स्कन्ने स्कन्ने होतव्यमिति सिद्धान्त. । भा ६।२।९।२९. ● 'स्कन्ने जुहोति' इति स्कन्दनहोम. निमित्तावृत्तौ आवर्तनीय. । दर्शादौ हि आज्यादिहविःस्कन्दनादौ प्रायश्चित्तार्थं होमो विहितः । वि. ६।२।९.

स्तनन्धयन्यायः । यथा स्तनन्धय. शिशुः आनन्द स्तन पायस्त्वा मृद्वादिगुणयोगिनि तल्पे शायित. स्वकीयादिज्ञानशून्यत्वेन रागादिरहित. सन् गुणमूर्तिरेशायतिष्ठते, तथा प्रज्ञानन्देकतत्पर. पुरुषो प्रज्ञानन्देकमात्रमवतीति । साहस्री ३३६.

● 'स्तनयित्नौ नाध्येयम्' अध्ययनधर्मोऽयं न कर्मणि प्रयोगधर्मः । भा. १२।१।७।१८–१९.

● स्तम्बयजुर्हरणम् । स्तम्बेन तृणमूलेन सह पांसूनां वेदेः पूर्वार्धात् बहिर्हरणम् । सत्याश्रौ. १।६। ६२–८५.

● स्तरणं अनुशिष्टस्य वेदादेः पुरुषार्थमेव । भा. ४।१।२।२ वर्णक २, ● स्तरण देवार्थसंस्कारकम् । १२।१।२०।४४, ● स्तरणे प्रयोजन वेदाच्छादनम् । ११।१।१४।४४.

जातं निवृत्तव्यापारया चोदनया प्रमाणान्तरं मृग्यम्, न च तदस्तीत्यप्रमाणता । यथा वक्ष्यति ' स एवाग्नि-रष्टाकपालस्य देवता नाऽऽग्नेयस्य ' ( २।२।३।६ भा. पृ. ४८७ ) इति । तेन वचनस्याभावात् यथैन्द्रे चोदितेऽग्नेर्देवतात्वं न भवति, सोमस्य न चोदिते न पुरोडाशस्य, अभिषुतस्य च न लतायाः, शुद्धे च न सगुणस्य, तथैव गुणवति चोदिते न निर्गुणस्य । उक्तं च । ' देवता हि विधेयत्वाद्विवक्षितगुणेष्यते । उपा-दाने तु तस्याः स्यादविवक्षा गुणादिषु ॥ ' यदि हि तद्धितसम्बन्धे देवतोद्दिश्यमाना स्यात्, ततोऽस्या गुणाविवक्षा भवेत् । इयं पुनर्विधीयमाना देवतात्वमेव न प्रतिपद्यते, इत्यवश्योपादातव्या । ततश्च विवक्षित-गुणत्वात्तदपाये न कथंचिद्देवतेति गम्यते । यथा ' शुक्लवासा भोजयितव्यः ' ' लोहितोष्णीषा ऋत्विजः प्रचरन्ति ' ' दण्डी प्रैषानन्वाह ' इति विशेषणरहिता-नामकर्माङ्गत्वम् । यदा तेऽप्युद्दिश्यन्ते योऽयं शुक्ल-वासास्तमानयेत्यादौ, तदा विनाऽपि विशेषणेनाऽऽ-नीयन्ते । तदिह यद्यपि तावद्देवता स्वरूपेणोपयुज्येत, तथापि न गुणरहिता आश्रीयेत, किमुत यदा अभि-धानोपकारिणी किंचिदतिरिक्ताभिधानाभिहिता नैव प्रत्यभिज्ञायते सैवेयं देवतेति । समासेन च विधीय-मानाया नानेकार्थविधिदोषप्रसक्तिः । तत्र माहेन्द्रग्रहणाद् न कथंचिदिन्द्रशब्देनोच्यते । या तु तेनोच्यते, सा तत्र नैव देवता इति आनर्थक्यमेवास्याः प्रकाशनम् । ( शुद्धेन्द्रदेवतात्वनिरासेऽपि विधिश्रुत्या सम्यक् अत्राव-गतो यस्य देवतात्वस्य तत् श्रुतिसमवायि, तस्य भावः श्रुतिसमवायित्वं इत्येवं सूत्र (१६) योजयति–) अतश्च ' न श्रुतिसमवायित्वात् ' इत्ययमपि सूत्रार्थो भवति श्रुतिसमवेतं देवतात्वं भविष्यति तदधीनज्ञान-मित्यर्थः । तच्च तद्धितसंवादे सति ज्ञायते । ( अभि-धानाभेदेऽपि देवताभेदमित्युपसंहरति–) तस्मा-दस्ति देवताभेद इति ।

अथ तस्मिन् पक्षे भाष्यगमनिका । तदभिधीयते । पूर्वपक्षवादी तावदनुरूपं ग्रहणस्य वदति, यस्य माहे-न्द्रात् ग्रहादिन्द्राभिधानसमर्थमन्त्रानुरूपं वदति तेना-कर्माङ्गभूतार्थप्रकाशनेत्यादिन्द्र एवात्र शुद्धो देवता-भूतः प्रकाश्यत इत्यभ्युपगतं भाति । तस्य च देव-तात्वं नाभ्युपगममात्रेण सिध्यति, नापि प्रमाणान्तरेणेति स एतद्ग्रहोपरचितवाक्ये देवताभिधानशक्तिस्तद्धितः श्रूयते ' माहेन्द्रं गृह्णाति ' इति तत्संयोगात् निश्चीयते । स च यदि समासाभिप्रायेण केवलादिन्द्रशब्दादु-त्पाद्यते, ततो मन्त्राभिधेयस्येव देवतात्वमुक्तं भवति । सिद्धश्चैतमर्थं पूर्वपक्षवादिनोऽभिप्रेतं मन्वानो निष्कृष्य प्रतीति ' इन्द्रोऽस्य देवता ' — इति तद्धितसंयोगेन ज्ञायते, न चास्य महत्त्वमपेक्षमाणस्य, अङ्गे समासे शुद्धस्योप-सर्जनीभूतस्य ' तद्धितसंयोगः ' ' तद्धितसंयोगापेक्षस्य वा ' इति । यद्यपि सापेक्षप्रधानसमासे प्रातिपदिकाव-स्थायां तद्धितापेक्षा, न च तदानीमसुबन्तत्वात् समासोप-पत्तिः । तेन यथैव पृथग्भूतं सुबन्तं सम्बन्धार्हमेव पदान्तर-मपेक्षते यथा ' राजपुरुषः शोभनः ' इति, तद्विषयमेवै-तत्, ' भवति वै प्रधानस्य सापेक्षस्यापि समासः ' इति द्रष्टव्यम् । अङ्गे च समासे तद्धितापेक्षायां वाक्या-त्तद्धितोत्पत्तिरित्यभ्युपेतं स्यात् । शुद्धस्य वा तद्धित-सम्बन्धाद्विशेषणानर्थक्यप्रसङ्गः । न मतुप् पुनर्भवतो नाभिप्रेतम्, पूर्वं तद्धितसम्बन्धे पूर्वोक्तावेव द्वयविशेषणो-त्तरपदवृद्धिप्रसङ्गदोषौ । न च समासार्थे वृत्तस्य शुद्धस्य तद्धितसंबन्धः । तेनैकस्मिन्नेव प्रयोगे तत्सम्बन्धोऽप्यु-पपन्नः । ततश्च ' ऐकार्थ्ये परार्थत्वात् ' ( ३।४। ५।८ ) इति तथैव वैरूप्यदोषः ।

' विशेषश्चापमन्योऽर्थः ' इति भाष्यमासादनेकार्थ-विधेः समासवदलभ्यत्वाद्वाक्यभेदमाह । कृते तु समासे नैव दोषः । ' तस्मान्नेन्द्रो देवता अमहत्त्वविशिष्टः ' शुद्धः किं तर्हि, विशिष्ट एव । अथवा नैन्द्री देवता केवलशब्दोपात्तः शुद्ध इत्यभिप्रायः । कथं तर्हि, महत्त्वविशिष्टः, समासप्रातिपदिकात्तद्धितोत्पत्तेः । ' न त्वयवचनत्वेन ' इति नावयवप्रसिद्धिनिराकरणपरम्, किं तर्हि, भावपरत्वेन तद्धितोत्पत्ति निष्कृष्टप्रका-शकत्वादित्यभिप्रायः । ' तस्माद्देवतान्तरम् ' इति । यद्यपि द्रव्यैकत्वे सगुणनिर्गुणाश्रयाद्देवतान्तरत्वम् । आह च–

न त्वाम्नातेषु ॥ २२ ॥

भाष्यम्— अपरेषां मन्त्राणामुत्कृष्टानामन्यनार्थवत्ता नास्ति, तेषामानर्थक्यं स्यात् । यथा 'याम्याः शंसति' 'शिपिविष्टवतीः शंसति' 'पितृदेवत्याः शंसति' आग्निमारुते, कुसुम्भसूक्तम्, अक्षसूक्तम्, मृगिरासूक्तमित्येवमादीनाम् ।

वा— 'आम्नातेष्वपि मन्त्रेषु नोत्कृष्टेष्वर्थदर्शनम् । सर्वेषु भवतीत्येवं नोत्कृष्टत्वं न दुष्यति ॥' नहि यमादीनां महान्तरेऽपि देवतात्वम्, येनैन्द्रवारुणैर्मन्त्रैः प्रकाश्येरन् । अतस्तेषां तावद्दृष्टानर्थक्यप्रसङ्गात् आवश्यमदृष्टार्थत्वेन भवितव्यम् । ततश्च तत्सामान्यादितरेषु तथात्वम्, तस्मात् सत्कारकमेवमिति ।

दृश्यते ॥ २३ ॥

भाष्यम्— तदुच्यते । उत्कृष्टानामर्थवत्ताऽस्ति । मण्डूकसूक्तस्याग्नौ, अक्षसूक्तस्य राजसूये, मृगिरासूक्तस्यैकादशिन्याम्, सर्वेषां वाजस्तोमे 'सर्वो ब्रह्म, सर्वाणि यजूंषि सर्वाणि सामानि वाजस्तोमे पठितानि शंसति' इति । तथा 'यस्याऽऽग्निर्वे दह्यमाने मृगो नोद्विगाच्छति(?) सर्वा दाशतयीरनुब्रूयात्' इति । तस्मादस्त्यर्थवत्ता उत्कृष्टानाम् । अतः प्रधानकर्मणी स्तोत्रशस्त्रे इति ।

वा— 'यमादयो न विद्यन्ते यद्यपि मद्देवताः । अन्यधर्मोपयोगित्वान् प्रकाश्याः स्तुत्यथाऽपि न. ॥' मण्डूकसूक्तस्याग्नौ प्रयोगः, तत्र मण्डूकेनाग्निविकर्षणाभावात् । अक्षसूक्तस्य राजसूये, तत्र 'अक्षैर्दीव्यति' इति विधानात् । मृगिरासूक्तस्यैकादशिन्याम्, 'आग्नेयं पशु' इत्युपक्रम्य मन्त्रकीर्तने सति तद्दृष्टार्थत्वेनैव गुणः । कुसुम्भसूक्तादीनां तु यदि प्रत्यक्षविनियोगोऽर्थो नास्ति, तत सामान्यविधानेनार्थवत्ता भविष्यति, वाजस्तोमे सर्वमन्त्रोपदेशात् । तथा आग्नेये मृगोऽप्यायधि समाप्त्यर्थमन्त्रोपलब्धात् । तत्र वचनेनैव समवेतार्थमन्त्रविधानमाशङ्क्य आम्नातदृष्टार्थावश्यम्, न च कश्चिद्दृष्टार्थत्वेन सर्वेषु दृश्यमानमप्यर्थं मोदस्य [illegible]

कल्पना युज्यते । तथाहि, 'न जपादावदृष्टार्थे वैगुण्याद्यादिनिदर्शनात् । याज्यादावपि दृष्टार्थे स्याददृष्टार्थकल्पना ॥'

अपि वा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २४ ॥

भाष्यम्— अपि वा प्रधानकर्मणी स्तोत्रशस्त्रे स्याताम् । कुतः ? श्रुतिसंयोगात् । सप्तमीश्रुतिसंयोगो हि भवति । 'मरुत्वतीषु स्तुवते' 'शिपिविष्टवतीषु स्तुवते' इति । यदि स्तुतिः, ततः करणी अप्रेप्सिता । यदि प्रकाशनम्, ततो देवतायाम् । [illegible] कार्यं करणे तृतीयया अश्रोष्यत, न सप्तम्या । अपि च, श्रुतिसंयोगो भवति 'प्रउगं शंसति' 'निष्केवल्यं शंसति' इति । अतः स्तुतिरभिनिर्वर्तयितव्या तेन मन्त्रेण । गुणवचनः शब्दः स्तुतिनिर्वर्तनार्थो दृष्टमर्थं करिष्यति । तस्मात् प्रधानकर्मणी । अपि च श्रुतिसंयोगो भवति षष्ठीविभक्तिसंयोगः । यथा 'इन्द्रस्य नु वीर्याणि प्रवोचम्' इति । तेन देवताशब्दः स्तुतिसम्बन्धार्थः प्रयुज्यते । देवताभिधानार्थे प्रातिपदिकार्थत्वात् प्रथमा स्यात् । अथ यत् प्रथमान्तम्, तद्देवतार्थं भवितुमर्हति यथा 'इन्द्रो यातोऽवसितस्य राजा' इति । तेस्तूयते । तदपि वाक्यसंयोगात् स्तुत्यर्थमेव । ननु वाक्याल्लिङ्गं बलीय । सत्यम् । एतदपि लिङ्गम्, यत् स्तुतिवाक्यस्य साकाङ्क्षस्य निराकाङ्क्षीकरणसामर्थ्यम् । तथाऽपि उभयथा लिङ्गे अनुपलभ्यमाने क्रमो निर्णयः, वाक्यशेषादेव, न देवताभिधानार्थ इति । देवताभिधानार्थे ह्येतस्मिन् पक्षे स्तुत्यर्थे साकाङ्क्षवचनमनर्थकमेव स्यात् । तस्माददृष्टार्थत्वात् स्तुतिवचनस्य प्रधानकर्मणी स्तोत्रशस्त्रे । अपि च, 'स्तौति' 'शंसति' इति शब्दात् गुणवचनौ लक्षणया अभिधार्थौ स्याताम् । तस्मात् क्रियोत्पत्तिं अपूर्वोत्पत्तिं विदध्यातामिति ।

वा— यदुक्तं मन्त्राणामभिधानशक्तिशब्दः इन्द्रशब्दः समानार्थे प्रयुज्यतेति । तदयुक्तम् । कुतः ? एतस्मादेव दोषात् । नहि इन्द्रशब्दस्य स्वार्थमभिदधतः कश्चिद्दोषः, येन श्रुतेर्बाधो जायात् । उत्कृष्टार्थानां

भाट्ट— 'आज्यैः स्तुवते' 'प्रउगं शंसति' इत्यादिस्तोत्रशस्त्राणां यागीयदेवतादिप्रकाशकतया याज्यामन्त्रवदेव दृष्टार्थत्वात् अवघातादिवदेव सन्निपत्योपकारकत्वम् । इति प्राप्ते, लोके गुणिनिष्ठगुणतात्पर्यकाभिधानस्यैव स्तुतिपदवाच्यत्वेन प्रसिद्धत्वात्, प्रगीताप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणतात्पर्यकाभिधानस्यैव स्तोत्रशस्त्रपदवाच्यत्वात्, एषां गुणिप्रकाशनतात्पर्यकत्वासंभवेन नैषां मन्त्राणां गुणिप्रकाशनार्थत्वम्, अपि तु गुणप्रकाशनरूपाणां स्तोत्रशस्त्राणामात्मनिष्ठादृष्टार्थतया आरादुपकारकत्वात् तन्मन्त्राणां तदर्थत्वमेव । न च प्रयाजशेषाभिघारणन्यायेन दृष्टार्थत्वानुरोधेन लक्षणया गुणिप्रकाशनरूपत्वम्, लिङ्गादेव तादर्थ्योपपत्तौ विधिवैयर्थ्यात् । एवं च माहेन्द्रयागसंनिधौ ऐन्द्री स्तुतिरुपपन्ना भवति । इतरथा शब्दसमवायिनी देवता विधिशब्देनैव निगमेषु वक्तव्येति महेन्द्रो नेन्द्रशब्देन शक्यते प्रकाशयितुम् । अतो यत्रेन्द्र एव देवता तत्रोत्कर्षापत्तिः, सामान्यसम्बन्धबोधकप्रमाणाभावेन वा मनोतास्वग्निशब्दवत् लक्षणया इन्द्रपदेन महेन्द्रस्यैव प्रकाशनापत्तिः । तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे ।

मण्डन— 'न देवतार्थः स्तुतशस्त्रपाठः ।' ६.

शंकर— 'स्तोत्रशस्त्रप्रधानत्वम् ।' ८.

● स्तुतशस्त्राधिकरणम् । इदमेव महेन्द्राधिकरणम् । स्तोत्रशस्त्राधिकरणं चेदमेव । स्तोत्रशस्त्रेषु विनियुक्तानां मन्त्राणां कर्मसमवायिदेवतास्तुत्या देवतास्मरणार्थत्वं नास्ति इति स्तुतशस्त्राधिकरणे उक्तम् । सोम. ११२११ पृ. ८. ● स्तुतशस्त्राधिकरणे आवर्णं उक्त. । वा १।२।६।१७, ● स्तुतशस्त्राधिकरणे लिङ्गक्रमयोर्विरोधो दर्शितः 'अर्थेन त्वपकृष्येत' (२।०।५।१८) इति । १।३।७।१८ पृ ८३६. ● स्तुतशस्त्राधिकरणे स्तोत्रशस्त्रयोरदृष्टार्थत्वं वक्ष्यते तथापि तयोरभिधानात्मकयोरदृष्टार्थत्वेऽपि तन्मन्त्राणां अभिधानरूपदृष्टार्थत्वं न विरुध्यते । कु. १।२।४।८३ पृ. ४६ ● स्तुतशस्त्राधिकरणे स्तोत्रशस्त्रयो. आरादुपकारकत्वं वर्णितम् । सोम. १०।८।२५.

● स्तुतशस्त्राधिकरणोदाहृतवृद्धश्लोके 'आचार्यो मातुलश्चैव द्रव्यैकत्वेऽपि दृश्यते । अपेक्षाहेतुभेदेन व्यवहारः पृथक्तया ॥' इत्यत्र विरुद्धानामपि अपेक्षाभेदेन एकत्र युगपत्सम्भवस्योक्तत्वात् वस्तुविरोधशङ्कावकाशो नास्ति । सु. पृ. ११११.

● वाजिशब्दस्य विश्वदेवपरत्वेऽपि न विश्वदेवत्वेन तेषां देवतात्वं किंतु वाजित्वेन, ततश्च स्तुतशस्त्राधिकरणगतेन्द्रमहेन्द्रन्यायेन देवताभेदात् नास्ति पूर्वकर्मसमवायः इति न च वाच्यम् । कु. २।२।९।२१.

● स्तुतशस्त्राधिकरणवार्तिके 'तदर्थो यादृशो यत्र देवतात्वेन चोदितः । मनागपि ततोऽन्यत्वे देवतेति न गम्यते ॥' इति व्याख्यातम् । सु. पृ. ७४२.

● स्तुतशस्त्रवान् षोडशिग्रहः । भा. १०।५।१२।४९–५२.

● स्तुतिः गुणगुणिसम्बन्धकीर्तनम् । सु. पृ. ३९५. ● स्तुतिः गुणगुणिसंबन्धकीर्तनम् । सा प्रथमं गुणगुणिभ्यां निर्वर्त्यते । तदभावे शब्दोच्चारणमात्रस्य स्तुतित्वाव्यपदेशात् । तत्र गुणानां तावदकर्माङ्गतया निष्प्रयोजनत्वात् एकान्तेन स्तुत्यर्थता । वा. २।१।५।१३ पृ. ४१६ ● स्तुतिः गुणसंकीर्तनम् । सु पृ. ८८५ । गुणसंकीर्तनपरः पदसमूहः स्तुतिः । वि. १०।५।११. ● स्तुतिः नाम गुणकथनपरमेकं वाक्यम् । वि. ९।२।१, ● स्तुतिः नाम स्तोतव्यस्य स्तावकैर्गुणैः सम्बन्धकीर्तनगानविशिष्टम् । २।१।५, ● स्तुतिः विद्यमानगुणैरिव अविद्यमानगुणैरपि भवति । ९।१।१६. ● स्तुतिः । 'विधिस्तुत्योः सदा वृत्तिः समानविषयेष्यते । तस्मादेकत्र संदिग्धनिर्णयाय प्रयत्यते ॥' वा. १।४।१३।२४. ● स्तुतिः साम्नैव, न ऋचा । वि ९।२।८. ● न च प्रत्यक्षविरुद्धा स्तुतिः सम्भवति । वा. १।२।१।२ पृ १०८. ● ननु 'इदं विष्णुर्विचक्रमे' इति स्तुतिरियम् । न खलु, नास्त्यत्र स्तुतिशब्दः । नापि किंचित्स्तोतव्यमस्ति । ननु विष्णुः । न च विष्णुना स्तुतेन कश्चिदर्थोऽस्ति । न स्तुतो विष्णुः कंचिदर्थमभिनिर्वर्तयते । भा. १२।४।१।१ पृ. २२७०.

कृत्स्नं सुन्याङ्गमेव नः । आधार एव तस्यापि धनना- नीतवाङ्मयत् ॥ नानावेदस्वरस्थाम्नात् स्तोभादेः प्रात आदितः । प्रधानाङ्गतया पश्चादुपाङ्गत्वेन कथितः ॥ ततो वाचनिरेणैव यथावचनभाविना । मन्त्राङ्गिना समस्तानि सुन्याङ्गानि प्रयुञ्ज्महे ॥ ' वा. ३।३।२।९ पृ. ८१२-१३.

* स्तोत्रशस्त्रादयः पदहधर्माः पदहाश्चौ मार- र्यन्ते । ते हि अह:धर्माः । तेषामह्नामावृत्तिरिति स्तोमशस्त्रादीनामावृत्तिरित्युक्तम् । न हि ते अहःसु अरत्नानप्रयोगेन चोद्यन्ते । भा. १०।६।१०।३०. * स्तोत्रशस्त्रादीनां अदृष्टार्थानां वचनसामर्थ्यात् ग्रहणम् । वा. ३।३।३।१०.

* स्तोत्रशस्त्रमन्त्राणां आधनुपकारकत्वम् । सु. पृ. १०९. * स्तोत्रशस्त्रमन्त्राणां प्राकृतानामेव अभिष्टुति मधिकारेण प्रयोगः । भा. १०।४।१८।५०. मीको पृ. ६५ ' अभिष्टुति स्तोत्रशस्त्रमन्त्राणा०' इत्यत्र अधि- करणं द्रष्टव्यम् ।

* स्तोत्रसाधनत्वं विकृत्यपूर्वार्थम् , प्रगीताया एव ऋचः । भा. ९।२।८।२०-२१ वर्णकं १.

* स्तोत्रीयः नाम तृचः ज्योतिष्टोमे रहिष्पव- मानादौ प्रथमः ' उपास्मै गायता० ' इत्यादिः । वि. ५।३।४, * स्तोत्रीया ऋक् । साम्नो योनिभूता प्रथमा ऋक् । ९।२।६. * स्तोत्रीयाः विश्वजित्, भूतोमशते । भा. १०।३।१४।५६.

* स्तोभः गीयुपाय. अन्यतमः । भा. ९।२।७। २९. * स्तोभः नाम अधिकरणे सति ऋगिन्प्रगुण- पर्णीयम् , ऋगिन्नअणवर्णत्वं चार्थानभिधायकत्वम् । वि. ९।२।११. * स्तोभाः सामशब्दार्थैकदेशः इति भाष्यम् , नेति वार्तिकम् । कै. (९।२।१०।३५ ).

[illegible] स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् । ९।२।१०।३३॥

' यद्योन्या तदुत्तरयोर्गायति ' अत्र उत्तरार्थवशेन तात्पर्यं न योनिवर्णवशेन इत्यवगतम् । अथ स्तोभाः अतिदिश्यन्ते न वेति विचारे पूर्वपक्षमाह । एके आचार्याः द्रव्यान्तरे ऋगन्तरे उत्तरायां स्तोभस्य निवृत्तिं मन्यन्ते । ऋग्वत् ऋगक्षरवत् । यथा योन्यक्षराणां स्तोभाः उत्तरायां न प्रदिश्यन्ते तथा योन्यां गीतस्य स्तोभस्यापि उत्तरायां नातिदेशः इति ।

सर्वातिदेशस्तु सामान्याल्लोकवत् विकारः स्यात् । ३४ ॥

योनौ गीतानां स्तोभानां उत्तरायां नातिदेशः इति पूर्वपक्षं तुशब्देन व्यावर्तयन् सिद्धान्तमाह । स्तोभानां न निवृत्तिः । किंतु सर्वातिदेशः सर्वस्य साम्नः अति देशः । सामशब्दस्य ऋक्स्तोभस्वरकालाभ्यासविशिष्टस्य गीतिसामान्यस्य वाचकः । सामान्यात् सामान्यवाच- कत्वात् । यद्यपि स्तोभाः ऋक्शब्दार्थैः न सम्बध्यन्ते तथापि नानर्थकास्ते । लोकवत् यथा लोके गायकैः अक्षरस्तुकानि यानि नाम प्रक्षिप्यन्ते तानि गीति- कालगणनार्थानि न अर्थसम्बन्धाय उच्चार्यन्ते तद्वदिहापि कालपरिच्छेदार्थानि स्तोभाक्षराणि अनुवर्तेरन् । तस्मात् स्तोभोऽपि प्रक्षेपरूपो विकारः स्यात् । ततश्च स्तोभ- स्याप्यतिदेश इति सिद्धान्तः ।

अन्वयं चापि दर्शयति । ३५ ॥

योनिस्थानां स्तोभानां उत्तरयोर्ऋचोः अन्वयं दर्शयति ' यत्र आर्चिकानि पदानि निर्वर्तन्ते स्तोभा गेष्णा- श्चानुयन्ति ' इति । गेष्णा. स्वराः । चापि अपिच इति हेतुसमुच्चयमाह । तस्मात् स्तोभानामतिदेशः ।

निवृत्तिर्वार्थलोपात् । ३६ ॥

योनिगतस्तोभानां उत्तरयोरतिदेशः इति सिद्धान्ते उक्ते पूर्वपक्षी आह । वाशब्दः सिद्धान्तपक्षव्यावृत्यर्थः । स्तोभानां निवृत्तिः स्यात् अतिदेशो न स्यात् । अर्थ- लोपात् । अग्निष्टोमे यज्ञायज्ञीयसाम अग्निं होतारं मन्ये दास्वन्तं इति आग्नेय्यां ऋचि गीयते । तत्र च ' अग्नि- दयति प्रतिदहति ' इति स्तोभा भवन्ति । क्वचित् विकृतिसोमे च ' ऐन्द्रासमत्स्यकाम गायति ' इति श्रुतम् । इन्द्रश्च शीतकर्मा दाहकत्वोपादरगम्यते । तेन उक्तानां स्तोभानां तत्र अर्थस्य तपनप्रतिदहनादेर्लोपात् निवृत्तिरेव स्तोभानां स्यात् । तस्मात् अन्यत्रापि स्तोभानां नातिदेशः स्यात् ।

कश्चिद्विपर्ययाभिमानो भ्रान्तेरन्यत्र स्मरणानिदर्शनम् । वेदे हि प्रामाण्यस्यानादित्वात्सिद्धप्रामाण्यस्य । कथम् ? 'यो यो गृहीता शास्त्रस्य स स्वयं नोपलब्धवान् । स्वातन्त्र्येणागृहीते च प्रामाण्यं नावतिष्ठते ॥' नादृशं चाऽष्टकादिस्मरणम् । न च चोदना मूलभूतोपलभ्यते । न चाननुभूतार्थस्याऽनुमानं शक्यते । यदि च वेदादुपलभ्य स्मृतयः प्रणीताः स्युस्ततोऽर्थस्मरणवदिदं तस्माच्छास्त्रं मन्वादिभिः प्रणीतमित्यपि पारम्पर्येण स्मर्येत । स्यादेतत् । अर्थस्मरणेन कृतार्थानां निष्प्रयोजनं मूलस्मरणमनादराद्भ्रष्टमिति । तदयुक्तम् । न हि वक्तृत्व प्रामाण्यं तदेव विस्मर्तुं युज्यते । अर्थस्मृतेः स्वतः प्रामाण्याभावात् । सर्वे पुरुषास्तावदेतज्जानन्ति यथा वेदमूलज्ञानाद्विना प्रामाण्यं न निश्चीयते इति ते कथमिव तत्रानादरं कुर्युः । अपि च— 'येन यत्नेन मन्वाद्यैः शास्त्रमर्थान्वयं प्रपाठितम् । पस्मात्तेनैव तन्मूलं चोदना न समर्पिता ॥' यदि हि तैरप्यर्थमात्रोपात्ययेभ्योऽधिगतं न वेदो दृष्ट इति तावत्पूर्वेषामप्ययमेव पर्यनुयोग इति निर्मूलत्वप्रसङ्गात् निर्मूलत्वान्न युज्यते । यदि तु प्रलीनशाखामूलता कल्प्येत ततः सर्वासां बुद्धादिस्मृतीनामपि तद्द्वारं प्रामाण्यं प्रसज्यते । यथैव च यदभिप्रेत त एव तत्प्रलीनशाखामस्तके निक्षिप्य प्रमाणीकुर्यात् । अथ विद्यमानशाखागता एवैतेऽर्थास्तथाऽपि मन्वादय इव सर्वे पुरुषास्तत एवोपलप्स्यन्ते । युक्ततरा च व्याख्यातृव्याख्यानविशेषाद्वेदादेव प्रतीतिरिति स्मृतिग्रन्थानर्थक्यं स्यात् । न च तद्दृश्यते । यदि वाप्याक्यादिह मन्वादिभिः प्रतिपन्न किं विधिवाक्यानुसारेणार्थवादरूपादिति । यथा— 'महताऽपि प्रयत्नेन तमिस्रायां परामृशन् । कृष्णशुक्लविवेकं हि न कश्चिदधिगच्छति ॥' न च मन्वादिवचनाद्वेदमूलत्वं निश्चितम् । ते हि निर्मूलमपि विप्रलम्भादिहेतोरुक्त्वा लोके वक्तारमिवैव वदेयुः । तस्मादप्रमाणम् ।

अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात् ।
२ ॥

भाष्यम्— अपि वेति पक्षो व्यावर्त्यते । प्रमाणं स्मृतिः । विज्ञानं हि तदित्यन्यथा भविष्यति ? पूर्वविज्ञानमस्य नास्ति, कारणाभावादिति चेत् । अस्ति, एव स्मृतेर्दृष्टस्य कारणमनुमास्यामहे । तत्तु नानुभवनम्, अनुपपत्तेः । न हि मनुष्या इहैव जन्मन्येवंजातीयकमर्थमनुभवितुं शक्नुवन्ति । जन्मान्तरानुभूतं च न स्मर्यते । ग्रन्थस्त्वनुमीयेत, कर्तृसामान्यात्स्मृतिवैदिकपदार्थयोः । तेनोपपन्नो वेदसंयोगस्त्रैवर्णिकानाम् । ननु नोपलभन्ते एवंजातीयकं ग्रन्थम् । अनुपलभमाना अप्यनुमिमीरन्, विस्मरणमप्युपपद्यते इति । तदुपपन्नतरात्पूर्वविज्ञानस्य त्रैवर्णिकानां स्मरतां विस्मरणस्य चोपपन्नत्वाद्ग्रन्थानुमानमुपपद्यते इति प्रमाणं स्मृतिः ।

अष्टकालिङ्गाश्च मन्त्रा वेदे दृश्यन्ते 'यां जनाः प्रतिनन्दन्ति' इत्येवमादयः । तथा प्रत्युपस्थितनियमानामाचाराणां दृष्टार्थत्वादेव प्रामाण्यम् । गुरोरनुगमात्प्रीतो गुरुरध्यापयिष्यति ग्रन्थग्रन्थिभेदिनश्च न्यायान् परितुष्टो वक्ष्यतीति । तथा च दर्शयति 'तस्माच्छ्रेयांसं पूर्वं यन्तं पापीयान् पश्चादन्वेति' इति । प्रपास्तडागानि च परोपकाराय, न धर्मायेत्येवावगम्यते । तथा च दर्शनम् 'धन्वन्निव प्रपा असि' इति । तथा 'स्थलयोदकं परिगृह्णन्ति' इति च । लोकविद्विष्टाकर्म, दर्शनं च 'यत्र बाणाः संपतन्ति कुमारा विशिखा इव' इति । तेन ये दृष्टार्थास्ते तत एव प्रमाणम् । ये त्वदृष्टार्थास्तेषु वैदिकशब्दानुमानमिति ।

वा— सर्वथा तावन्मन्वादिप्रणीताः सनिबन्धनाः स्मृतयः शेषाणि च विद्यास्थानानि सार्थं प्रतिपादयन्त्युपलभ्यन्ते । मन्वादीनां चाप्तत्वाच्चविज्ञानमूलमदृष्टं किंनिबन्धनत्वं कल्पनीयम् । तत्र च— 'भ्रान्तेरनुभवाद्वाऽपि पुंवाक्याद्विप्रलम्भनात् । दृष्टानुगुण्यसाध्यत्वाच्चोदनैव लघीयसी ॥' सर्वत्र चादृष्टकल्पनायां तादृशं कल्प्यते यद्दृष्टं न विरुणद्धि न चाऽदृष्टान्तरमपेक्षते । तत्र च यो नाम कल्प्यमानो दृष्टविरुद्धं चादर्शनविशेषापत्तिः । सर्वेषां चाप्युपगतदृष्टप्रामाण्यबाधश्च । इदानीन्तनैश्च पुरुषैर्न भ्रान्तिर्मन्वादीनामनुवर्तिता । तत्परिहारायैकपाक्षश्च मन्वादीनामित्यनेनादृष्टकल्पना । अनुभवेऽपि न एव तावदनुभवः कस्यचि-

तत्र । पुनश्चेदानींतनसर्वपुरुषजातिविपरीतसामर्थ्यकल्पना, मन्वादेस्तच्चैतत्सर्वज्ञवादे निराकृतम् । पुरुषवाक्यपरम्पराऽप्यन्धपरम्परया निराकृता । न हि निष्प्रतिष्ठप्रमाणात्प्रमालाभो दृश्यते । तथा विप्रलम्भेऽपि तत्कल्पना । विप्रलिप्सा प्रयोजनं लोकस्य च तत्र भ्रान्तिस्तस्याश्चेयन्तं कालमनुवृत्तिरित्याद्याश्रयणीयम् । उत्पन्नस्य च दृढस्य प्रत्ययस्य प्रामाण्यनिराकरणाद्दृष्टविरोधः । तस्मात्सर्वेभ्यश्चोदनाकल्पनैव ज्यायसी । तत्र हि तन्मात्रादृष्टाभ्युपगमः । शेषास्तु महाजनपरिग्रहादयः सर्वेऽनुनिधीयन्ते । संभाव्यते च मन्वादीनां चोदनापूर्वविज्ञानकारणत्वेन । तदर्थमेवाऽऽह 'तेनोपपन्नो वेदसंयोगस्त्रैवर्णिकानाम्' इति । यानि पुनरनुपपन्नवदसंभावनानां म्लेच्छादीनामतीन्द्रियार्थस्मरणानि तेषां मूलकल्पनावेलायामेव चोदनासंभावनापदं नाऽऽरूढेति मिथ्यात्वहेतुभूतचतुष्टयपारिशेष्यादप्रमाणत्वम् । संभाविताया पुनश्चोदनाया कारणान्तरनिषेधे कृते निर्मूलत्वासंभवात्परिशेषसिद्धं चोदनामूलत्वम् । यत्तु किमर्थं चोदना नोपलभ्यन्त इति । तत्र केचिदाहुः । नित्यानुमेयास्ता न कदाचिदुच्चार्यन्ते । यथा लिङ्गादिकल्पिताः । कथमनुच्चारितानां मूलत्वोपपत्तिरिति चेत् । नैष दोषः । पाठाविच्छेदवत्पारम्पर्येण स्मरणात्तत्सिद्धेः । यथैव हि ग्रन्थः संप्रदायादविच्छिन्नोऽस्तित्वं भजते तथैव प्रतिज्ञया नित्यानुमेयश्रुतिसंप्रदायाविच्छेदसिद्धिः । तदयुक्तम् । ग्रन्थपरम्परायामेव या हि चोदना न कदाचिदुच्चार्यन्ते तस्याः सर्वपुरुषप्रत्यक्षादिप्रसराभावाद्दुर्लभतरमस्तित्वम् । तथा च स्मृतेरपि सैव वन्ध्यादौहित्रतुल्यता । लिङ्गादीनां तु नित्यत्वान्नित्यमनुच्चरितश्रुत्यनुमानकारणत्वमविरुद्धम् । तेन वरं प्रलीनश्रुत्यनुमानमेव । न च प्रलयो न संभाव्यते । दृश्यते हि प्रमादालस्यादिभिः पुरुषक्षयाच्चाल्पविषयत्वम् । न चैवं सति यत्किंचित्प्रमाणमापद्यते । शिष्टत्रैवर्णिकदृष्टस्मरणान्यथानुपपत्तिलभ्यत्वात् श्रुत्यनुमानस्य ।

यद्वा विद्यमानशाखागतश्रुतिमूलत्वमेवास्तु । कथमनुपलब्धिरिति चेदुच्यते— 'शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः । नानाप्रकरणस्थत्वात्स्मृतेर्मूलं न दृश्यते ॥' यत्तु किमर्थं वेदवाक्यान्येव नोपसंगृहीतानीति । संप्रदायविनाशभीतेः । विशिष्टानुपूर्वीव्यवस्थितो हि स्वाध्यायोऽध्येतव्यः श्रूयते । स्मार्ताश्च आचाराः केचित्कचित्कस्यांचिच्छाखायाम् । तत्रापि तु केचित्पुरुषमेवाधिकृत्याऽऽम्नायन्ते । ये तु क्रतुप्रकरणाम्नाताः केनचिन्निमित्तेनोत्कृष्यमाणाः पुरुषधर्मतां भजन्ते । यथा 'मलवद्वाससा सह न संवदेत्' 'तस्माद्ब्राह्मणायावगुरेत्' इत्येवमादयः । तत्र यदि तावत्तान्येव वाक्यान्युद्धृत्याध्यापयेयुस्ततः क्रमान्यत्वात्स्वाध्यायविधिविरोधः स्यात् । अनेन च निर्देशेनान्येऽप्यर्थवादोद्धारेण विधिमात्रमधीयीरन् कर्मौपयिकमात्रं वा । तत्र वेदप्रलयः प्रसज्येत । न चावश्यं मन्वादयः सर्वशाखाध्यायिनः । ते हि प्रयत्नेन शाखान्तराध्यायिभ्यः श्रुत्वाऽर्थमात्रं स्ववाक्यैरविस्मरणार्थं निबध्नीयुः । न च वाक्यविशेषो ज्ञायते । यथैव हि स्मृतेर्वेदत्वाद्भ्रान्तिमूलत्वं नास्त्येवमर्थवादमूलत्वमपि । शक्नुवन्ति हि ते विध्यर्थवादौ विवेक्तुम् । तत्र स्मृतेर्विध्यात्मकत्वात्प्रकृतितादात्म्यानुमानं श्रुत्यर्थवादेऽर्थवादपूर्वकत्वं निष्प्रमाणकम् । अपि च 'वेदोऽखिलो धर्ममूलम्' 'स सर्वोऽभिहितो वेदे' इति च स्वयमेव स्मर्तृभिरात्मा यद्भुवा समर्पितस्तच्चैतन्नियोगतस्तत्कालैः कर्तृभिर्बुद्धिकारित्वादुपलब्धमेव सिद्धं वेदद्वारं प्रामाण्यम् । यस्तु कर्तृसामान्यात्स्वतन्त्रमेव प्रामाण्यं वेदमूलत्वं वाऽनुमानेन साधयति तस्यार्थकामानुसारिभिर्दृष्टार्थैराचारैरनैकान्तः । श्रूयमाणश्रुत्यधीनप्रामाण्यापदेशश्च विरुद्धता तस्मादर्थापत्तिरेवाव्यभिचाराद्युक्तस्तात्पर्या मानादनुमानं वेनोक्ता । 'अस्या एव स्मृतेर्दृष्टिम्' इति । दृष्टत्वात्कारणानुमानमथवा दृष्टत्वस्य । 'न हि मनुष्या इव' इति । निःशेषधर्मावच्छिन्नाः मरणेनान्तरितत्वात्कर्मफलसंबन्धानुसंधाना समवेतोच्यते । 'स्मृतिवैदिकपदार्थयोः कर्तृसामान्यादुपपत्तौ वेदसंयोगस्त्रैवर्णिकानाम्' इति । चोदनामूलसंभावनापदलाभार्थम् । 'विस्मरणमप्युपपद्यते' इति । दृश्यते शाखात्वेऽप्यर्थस्मरणं ग्रन्थनाशश्च । यदा तु

शाखान्तरेषु विप्रकीर्णा एव ताः श्रुतयस्तदाऽपि कस्याः शाखायाः काः पठ्यन्त इत्यस्याशक्यं विस्मरणम्। वैदिकस्मार्तं तु प्रामाण्यसिद्धये परिपालयन्ति। तद्विशेषज्ञानं पुनस्तैरप्रस्तुतत्वादनादर्तव्यमेव। 'तथा प्रत्युपस्थितनियमानाम्' इति। आगतमागतं निमित्तं प्रति ये नियम्यन्ते वृद्धव्यवहारादयस्तेषाम्। 'दृष्टार्थत्वादेव प्रामाण्यम्' इति।

एतदयुक्तम्। कुतः— 'धर्मं प्रति यतोऽङ्गेदं प्रामाण्यं प्रस्तुतं स्मृतेः। तस्माद्दृष्ट्यादिवक्षेपामुपन्यासो न युज्यते॥' न हि यावत्किंचिदाचरणं तस्य सर्वस्य मूलमिह प्रमाणं मिष्यते। धर्मजिज्ञासाधिकारात्। यदि च गुर्वनुगमादीनां केवलं दृष्टार्थत्वमेव स्यात्ततः कृष्यादिवद्धर्मे प्रमाणप्रामाण्यमेवेति नोपन्यसितव्याः। स्यादेतत्प्रमाणत्वेनैवामुपन्यास इति। न। तथा सति 'हेतुदर्शनाच्च' इत्यत्रोदाहर्तव्या भवेयुः। तस्मात् भेषाऽमिति च दर्शनं निष्फलम्। न च नियोगतः शास्त्रादृते प्राप्तिः। शक्यते ह्युपायान्तरेणापि सामदानादिना गुरुरध्यापनादीनि कारयितुम्। तत्रास्ति नियमविधेरवकाशः। यदि च यथाकथंचिट्टीकणच्छिन्नहानोपादानात्मरक्षणप्रीत्युत्पादादिभिर्दृष्टार्थता भाष्यकारोक्ता शक्या वक्तुम्। न चावपातादीनां कृषियमयामादीनां च दृष्टार्थानामवैदिकत्वम्। तस्मादत्यन्तदृष्टार्थत्वे संभाव्यते वेदमूलत्वं नियमादृष्टसिद्धेरनन्यप्रमाणकत्वात्। अतश्च गुर्वनुगमनादेर्नैमित्तिकत्वादक्रियायां प्रत्यवायः करणे च न भवति। इह च श्लोके गुरुरध्यापयिष्यतीत्येवमादि निपात्यते। नियमापाविभक्तमादृष्टार्थपूर्वसिद्धिः। एवं च 'भ्रान्त्यादृष्टप्रमाणेषु तथा स्यात्' ( १।३।१०। २१ ) इत्यत्र सकृदुच्चरितानुष्ठानमिति सिद्धान्ते युक्तः। इतरथा तु दृष्टार्थत्ववर्णनेनैवोदकपानादिवद्व्यवहारः स्यात्। यत्तु भाष्यकारेण दृष्टार्थत्वादेव प्रामाण्यमित्युक्तं तदपि पद्धात्र्यर्थानन्तरार्थम्। एतदुक्तं भवति, यावत्तद्दृष्टयोः स्मृतयस्ता कश्चिदप्रमाणी कुर्याद्दूषान्, इमाः पुनर्गुर्वनुगमनादिविषयाः कथंचिदप्रमाणं भविष्यन्तीति। उपाकर्मादीनां यद्यपि विशेषश्रुतिः नैव कल्प्यते तथाऽपि धर्मोपकारश्रुत्यैव समस्तानामुपादानात्प्रामाण्यम्। तस्माच्छेषाणामितरपक्षे सर्वेषामनुगन्तव्ये सिद्धवच्छेषाणामेवानुगमनं दर्शयति। यथा धन्वनि निरुदके कृताः प्रपाः परेषामुपकुर्वन्त्येव त्वमिति देवतास्तुतिपरे वाक्ये सिद्धवत्प्रपासद्भावस्तस्याश्च पारार्थ्यं दृश्यते। गोत्रचिह्नं शिखाकर्म तथाप्याचारनियमस्यादृष्टार्थत्वाच्चैव ताक्ष्माप्नमेव प्रयोजनम्। शक्यं ह्युपायान्तरेणापि गोत्रं स्मर्तुं तेनान्य एवाभिप्रायः। कर्माङ्गभूतं तावच्चतुर्वर्णचण्डालादिविभागसिद्ध्यर्थमवश्यं स्मर्तव्यं गोत्रम्। अतश्च तच्चिह्नार्थमपि तावच्छिखाकल्पस्मृतेः प्रामाण्यमस्तु। तन्नियमादृष्टस्य त्वैकान्तेनैवानन्यगतित्वात्पुरुषार्थता सेत्स्यतीति। तेन सर्वस्मृतीनां प्रयोजनवती प्रामाण्यसिद्धिः। तत्र यावद्धर्ममोक्षसंबन्धि तद्वेदप्रभवम्। यत्त्वर्थसुखविषयं तल्लोकव्यवहारपूर्वकमिति विवेक्तव्यम्। एषैवेतिहासपुराणयोरप्युपदेशवाक्यानां गतिः। उपाख्यानानि त्वर्थवादेषु व्याख्यातानि। यत्तु पृथिवीविभागकथनं तद्धर्माधर्मसाधनफलोपभोगप्रदेशविवेकाय किंचिद्दर्शनपूर्वकं किंचिद्वेदमूलम्। वंशानुक्रमणमपि ब्राह्मणक्षत्रियजातिगोत्रज्ञानार्थं दर्शनस्मरणमूलम्। देशकालपरिमाणमपि लोकज्योतिःशास्त्रव्यवहारसिद्ध्यर्थं दर्शनगणितसंप्रदायानुमानपूर्वकम्। भाविकथनमपि त्वनादिकालप्रवृत्तयुगस्वभाव — धर्माधर्मानुष्ठानफलविपाकवैचित्र्यज्ञानद्वारेण वेदमूलम्। अङ्गविद्यानामपि अर्थपुरुषार्थप्रतिपादन लोकवेदपूर्वकत्वेन विवेक्तव्यम्। तत्र शिक्षायां तावद्वर्णकरणस्वरकालादिप्रविभागकथनं तत्प्रत्यक्षपूर्वकम्। यत्तु यथाविज्ञानप्रयोगे फलविशेषस्मरणम्। 'मन्त्रो हीनः स्वरतो वर्णतो वा' इति च प्रत्यवायस्मृतिस्तद्वेदमूलम्। एवं कल्पसूत्रेष्वर्थवादादिभिः प्रकारान्तरविप्रकीर्णन्यायलभ्यविप्रकृष्टव्यवहारकल्पनामनिरूपणं तत्तत्प्रमाणमहीतव्यम्। लोकव्यवहारपूर्वकाश्च केचित्तदिक्कालादिव्यवहाराः सुखार्थत्वेनाऽऽश्रिताः। व्याकरणेऽपि शब्दापशब्दविभागज्ञानं साक्षाद्दृष्टादिविभागलक्षणप्र-

निमित्तम् । साधुशब्दप्रयोगात्फलसिद्धिरपशब्देन तु फलवैगुण्यं भवतीति वैदिकम् । छन्दोविचितिरप्यपि गायत्र्यादिविवेको लोकवदेव पूर्ववदेव प्रत्यक्षं । तज्ज्ञानपूर्वप्रयोगात्तु फलमिति श्रौतम् । तथा चाहिष्ठ श्रूयते 'यो ह वाऽविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वा' इत्यादि । ज्योतिःशास्त्रेऽपि युगपरिवर्तपरिमाणद्वारेण चन्द्रादित्यादिगतिविभागेन तिथिनक्षत्रज्ञानमविच्छिन्नसम्प्रदायगणितानुमानमूलं ग्रहसौस्थ्यदौस्थ्यनिमित्तपूर्वकृतशुभाशुभकर्मफलविपाकसूचनं तद्वत् शान्त्यादिविधानद्वारेण वेदमूलम् । एतेन सामुद्रवास्तुविद्यादि व्याख्यातम् । ईदृशा वा विषये सर्वमानुमानिकम् । ईदृशो गृहारामादिसन्निवेशो शस्यस्तदेतच्च प्रत्ययमिति । मीमांसा तु लोकादेव प्रत्यक्षानुमानादिभिरविच्छिन्नसम्प्रदायपण्डितव्यवहारैः प्रवृत्ता । नहि कश्चिदपि प्रथममेतावन्तं युक्तिकलापमुपसंहर्तुं क्षमः । एतेन न्यायविस्तरः व्याख्यातः । विषयो वेदवाक्यानां पदार्थैः प्रतिपाद्यते । ते च जात्यादिभेदेन सङ्कीर्णा लोकवर्त्मनि ॥ सुलक्षणविविक्तास्ते प्रत्यक्षादिभिरञ्जसा । परीक्षितापि ते शक्या प्रविवेक्तुं न तु स्वयम् ॥ वेदोऽपि विप्रकीर्णात्मा प्रत्यक्षाद्यवधारितः । स्वार्थं साधयतीत्येवं ज्ञायते न्यायविस्तरात् ॥' तथा च मानवेऽप्यभिहितम्— 'प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥' तथा— 'यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥' इत्यादिभिः तर्कविशुद्धिरभिहिता । श्रवणं च मनुष्याणामधर्मभूयिष्ठत्वाच्च ज्ञानशक्तिरद्य प्रतिहन्यते तु सुतरां तु भवन्ति । तत्र लोकायतादौ पतितस्य स्मृतेन्द्रियाद्यैः सर्वप्रतिपत्तिप्रतिपादनम् । तदुपपादनस्य शब्दान्तरत्वं च शिष्यव्यवहारकल्पनं । अन्यथा पुनः— 'प्रतिभान्त्येव पुंसामपूर्वार्थाः पतन्त्यपि । भ्रान्तिर्बहुमता सत्यं शुद्धस्नानबोधनात् ॥' सर्वासु तु मार्गितासु स्यात् स्वप्न विशेषतस्तु कश्चिदुपयुक्ताः प्रमाणानि करिष्यन्ति । यदि च निगमनिरुक्तव्याकरणमात्रान्नोपपत्तिरेषा व्यकान्तप्रतिपादनं तदपि पक्षपातादृतेऽन्यतरांशनिरूपणाशक्तेः । अन्वयं च सर्वात्मकवस्तुयुगपद्ग्रहणासमर्थत्वादङ्गोपाङ्गप्रतिपदविषयविवक्षार्थमेकैकनिरूपणमादरेण कर्तव्यम् । अन्यथा येऽनवाप्तसामान्यविशेषाद्युपपत्तयः पुरुषास्ते पदप्रतिपाद्यं निष्कृष्टवस्तुभागं लोकमात्रालोचनेन नैवाध्यवस्येयुः । मन्त्रार्थवादोपाख्यानाश्च स्तुतिनिन्दास्तुतिनित्यानित्यैकपृथक्त्वैकान्तमाश्रित्य तत्र तत्र विधिप्रतिषेधाङ्गत्वेन प्रवर्तमानाः पक्षपातप्रतिपादितवस्तुधर्मवैचित्र्यादृते निरालम्बनाः स्युः । याश्चैताः प्रधानपुरुषेश्वरपरमाणुकारणादिप्रक्रियाः सृष्टिप्रलयादिरूपेण प्रवृत्तास्ताः सर्वा मन्त्रार्थवाददर्शनादेव दृश्यमानसूक्ष्मस्थूलद्रव्यप्रकृतिविकारभावदर्शनेन च द्रष्टव्याः । प्रयोजनं च स्वर्गयागाद्युत्पाद्योत्पादकविभागज्ञानम् । सर्गप्रलयोपवर्णनमपि देवपुरुषकारप्रभावप्रविभागदर्शनार्थम् । सर्वं हि तद्बलेन प्रवर्तते तदुपरमे चोपरमतीति । विज्ञानमात्रक्षणभङ्गनैरात्म्यादिवादानामप्युपनिषदर्थवादप्रभवत्वं विषयेष्वात्यन्तिकं रागं निवर्तयितुमित्युपपन्नं सर्वेषां प्रामाण्यम् । सर्वत्र च यत्र कालान्तरफलं तदिदानीमनुभवासम्भवात् श्रुतिमूलता । यद्दृष्टफले तु क्वचिद्विवादो पुरुषान्तरे व्यवहारदर्शनादेव प्रामाण्यमिति विवेकसिद्धिः ।

शा— 'वैदिकैः स्मर्यमाणत्वात्तत्परिग्रहदार्ढ्यतः । सम्भाव्यवेदमूलत्वात्स्मृतीनां वेदमूलता ॥'

सोम— साक्षात् निरपेक्षतया धर्मप्रमितिजनकत्वात् चोदनायाः प्रथमं प्रामाण्यं विचारितम्, तदनन्तरं तदेकवाक्यतापन्नानां अर्थवादादीनाम्, इदानीं कृत्स्नस्य वेदस्य प्रामाण्यविचारानन्तरं तन्मूलतया प्रमाणत्वात् स्मृत्यादीनां प्रामाण्यं विचार्यते इति आनन्तर्यमित्यर्थः । सूत्रार्थस्तु—चोदनैव धर्मे प्रमाणमिति धर्मस्य वेदैकमूलत्वात् मूलभूतवेदरहितं स्मृत्यादिकं धर्मप्रमाणत्वेन अनपेक्ष्यमिति ।

वि— 'अष्टकादिस्मृतेर्धर्मे न मानं मानताऽथवा । निर्मूलत्वान्न मानं सा वेदार्थोक्तौ निरर्थता ॥'

वैदिकैः सर्वप्रमाणग्रन्थसमाख्याता वेदमूलता । विप्रकीर्णार्थसंक्षेपात् सार्थत्वादस्ति मानता ॥ मा सात्वतशास्त्रादिराद्या जना इति मन्यथाः । तत्र, स्मृतेर्मूलवेदोऽनुमितो मानत्वसंभवात् ॥ '

भाट्ट— शिष्टैर्वैदिकपरिगृहीतानां मन्वादिस्मृतीनां धर्माधर्मयोः प्रामाण्यमस्ति न वेति सन्देहे सन्मूलकत्वनिश्चायकाभावात् अप्रामाण्यम् । न ह्यत्र प्रत्यक्षादि मूलम्, तेषां धर्माधर्मयोः अप्रवृत्तेः । वेदस्य च प्रत्यक्षपठितत्वानुपलम्भात् । उपलम्भे वा स्मृतिप्रणयनवैयर्थ्यात् । प्रत्यक्षपठितस्य इदानीमुच्छेदस्य च वैदिकैर्वेदभागपरिगणनं दृश्यमानं भागभागापरित्यागेन पाठ्यमानतया कल्पयितुमशक्यत्वात् । न च नित्यानुमेयो वेदो मूलम् । स्मृतेर्मूलसामान्यव्याप्तत्वेऽपि वेदव्याप्त्यभावेन अनुमानानुपपत्तेः । मनोरप्यनुमेयवेदवत्त्वे अन्धपरम्परापत्तेश्च । अतश्च कल्पमूलत्वासंभवात् भ्रान्त्यादिमूलत्वेन अप्रामाण्यम् । इति प्राप्ते, शिष्टानामप्यविगीतपरम्परया ज्योतिष्टोमादिष्विव अष्टकास्वाचमनादिष्वपि धर्मत्वेनाधर्मत्वेन च परिग्रहात् मन्वादीनां त्रैवर्णिकत्वेन वेददर्शनसंभवाच्च तन्मूलकत्वमेव युक्तम्, न तु भ्रान्त्यादिमूलकत्वम् । तत्कारणस्य भ्रमविप्रलम्भादेः कल्पने गौरवाच्च । श्रुतिश्च प्रत्यक्षपठितैव मूलम् । न च स्मृतिप्रणयनवैयर्थ्यम् । शाखान्तरोपसंहारेण अर्थवादार्थोद्धारेण न्यायसिद्धार्थकथनेन च स्मृतिप्रणयनस्य सार्थक्यात् । अतो मूलश्रुत्युपस्थापकत्वेन धर्माधर्मप्रमाप्रयोजकत्वं स्मृतीनामिति सिद्धम् ।

मण्डन— ' मन्वादिवाक् निरूढवेदमूला । '

शंकर— ' स्मृतीनां च प्रमाणत्वम् । '

• स्मृत्यधिकरणे एव उभयोरपि स्मृत्याचारयोः प्रामाण्यं स्थापितम् । कौ. १।८।६।८, ० स्मृत्यधिकरणे भ्रान्त्यादिकल्पनातो वेदमूलत्वकल्पनाया लघुभूतत्वात् वेदमूलत्वमेवाश्रितम् । १।३।६।११. ० स्मृत्यधिकरणे स्मृतीनां वेदमूलकत्वस्य व्यवस्थापनात् अत्र यज्ञादिधर्मविषयस्मृतीनिर्मूलत्वेनाप्रामाण्यं न शङ्क्यम् । सु. पृ ५१. ० स्मृत्यधिकरणे स्मृत्याचारयोः अनुमानाश्रयत्वं न श्रुत्यनुमापकत्वं किंतु अर्थापत्तिविषयत्वमित्युक्तम् । कौ. १।३।७।१५. ० कल्पसूत्राणां वेदमूलकत्वेन प्रामाण्यं स्मृत्यधिकरणे तुल्यन्यायतया गतगतम् । कु १।३।७।१० पृ ६७. ० यत्र कल्पसूत्राणां मूलभूता श्रुतिर्न प्रत्यक्षा तत्र तावत् पौरुषेयत्वेन लौकिकवाक्यवत् धर्मप्रमाजनकत्वाभावेऽपि मूलभूतप्रमाणोपस्थापकत्वेन धर्मप्रमाप्रयोजकत्वात् भाक्त एव प्रामाण्यव्यवहारः इति स्मृत्यधिकरणे एव ( धर्मप्रमाजनकत्व ) निरस्तम् । कौ. १।३।६।१२ पृ. ९१. ० श्रुतोपयोगोपाख्यानमार्गेण सृष्टिप्रलयादिवाक्यानामपि यथायथं धर्मानुपयोगिता दर्शिता । सा च स्मृत्यधिकरणे वक्ष्यते । सु पृ. ४२.

० कल्पसूत्राणि किं वेदरूपाः एव, किंवा पौरुषेयाः सन्तः स्मृत्यधिकरणन्यायेन वेदमूलतया प्रमाणं इति संदेहः । कौ. १।३।६।१०, ० कल्पसूत्रादीनां स्मृत्यधिकरणन्यायेन वेदमूलत्वोपपत्तेः नाप्रामाण्यम् । १।३।६।१०.

० स्मृत्यधिकरणवक्ष्यमाणप्रामाण्यायाः सदाचाररूपायाः शास्त्रप्रसिद्धेः असन्मूलत्वाशङ्का न युक्ता । सु पृ. ९४.

• विरोधाविरोधयोः प्रामाण्याप्रामाण्ये स्मृत्यधिकरण-विरोधाधिकरणाभ्यामेव सिद्धे । सोम. १।३।८.

० कल्पसूत्राणामपि शिष्टैर्गोनेकशाखागत-भूयर्थनिबन्धनेन स्मृतित्वस्य स्वात् स्मृत्यधिकरणविषयत्वसंभवेऽपि । सु पृ. २२८, • कल्पसूत्राणामपि स्मृत्यधिकरणे वेदमूलत्वं प्रतिपादितं इत्यभ्युपेत्योक्तम् । इदानीं अभ्युपगमत्वेन तत्र पूर्वपक्षकरणात् कल्पसूत्रेषु च तदसंभवात् एषां स्मृत्यधिकरणविषयत्वाभावात् इत्याह । मूलभूतवेदानुमानेन तत्र सिद्धान्तकरणात् प्रत्यक्षवेदमूलेषु कल्पसूत्रेषु अनुमानायोगाच्च सिद्धान्तासंभवेनापि तेषां स्मृत्यधिकरणविषयत्वं नास्ति इत्याह । पृ. २२७.

● स्मृत्यपेक्षया श्रुतिः प्रबला । १।३।२।३-४ मीको पृ ३९५४ ‘विरोधाधिकरणम्’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

■ स्मृत्याचारयोर्बलाबलम् ॥ (वार्तिककारमतेन)।

[ तेष्वदर्शनाद् विरोधस्य समा विप्रतिपत्तिः स्यात् । १।३।४।८ ॥ शास्त्रस्था वा तन्निमित्तत्वात् । ९ ॥ ]

अथवा स्मृत्याचारविरोधविषयम् एतदधिकरणम् । अत्रायं पूर्वपक्षाभिसन्धिः । यथा हि मन्वादिस्मृतीनां श्रुतिमूलत्वं तथा सदाचाराणामपि श्रुतिमूलत्वं निरूपितमेव । तत्र स्मृतिविरुद्धानामपि अदृश्यमानलोभादिमूलानां वेदव्यवहारिभिरेव आचर्यमाणत्वेन सदाचारत्वाविशेषात् ‘अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्’ (१।३।१।२) इत्यनेन न्यायेन स्मृतिविरोधेऽपि वेदविरोधाभावेन विप्रतिपत्तेः समत्वात् सदाचारस्य वेदमूलत्वमेव । अथवा आचारस्यैव बलीयस्त्वम् । स हि श्रुत्यनुमाने लिङ्गभूतः प्रत्यक्षेणैवावगम्यते । स्मृतिः पुनः मन्वादिवचनादनुमिता श्रुतिमनुमापयति इति विप्रकर्षात् दुर्बला । येषामपि मनुवचनमेव श्रुत्यनुमाने लिङ्गम्, तेषामपि वक्तृज्ञानानुमानद्वारेण श्रुत्यनुमानम् इति विप्रकृष्टत्वमेव स्मृतेः, आचारात् इति । तदुक्तं ‘यावद् विस्मरणं दृष्ट्वा श्रुतिस्तस्याऽनुमास्यते । तावद्बुद्ध्यात्मकं पूर्वमाचारः प्रतितिष्ठति ॥ प्रतिष्ठितस्य बाधश्च कीदृक् परिकल्प्यताम् । तेनाचारबलीयस्त्वं समस्तं वेद युज्यते ॥’ इति । (यावद्धि स्मरणं दृष्ट्वा इति वार्तिकमूले पाठः । स एव च युक्तः । वा पृ २२०)। एवं प्राप्ते, अभिधीयते । सत्यमेव यदि स्मृत्याचारयोः तुल्यरूपत्वं भवेत् । किन्तु स्मृतिः प्रत्यक्षश्रुतितत्परमन्वादिप्रणीता लोभानिबन्धना च अनवगीता वेदमेव मूलभूतं कल्पयति इति युक्तम् । आचारस्य तु वेदव्यवहारिभिः अननुष्ठेयत्वात् प्रयुक्तस्यापि कार्मित्वप्रत्ययात् न्यायाभासादिमूलतया च अन्यथाभावसम्भवात् तथा न स्मृतिविरोधे प्रामाण्यम् । दृश्यन्ते च अद्यत्वेऽपि वेदव्यवहारिणामेव धर्मबाधे अनाचाराः स्मृतिविरुद्धाः । यथा दाक्षिणात्यब्राह्मणीनाम् अनुमरणम् । तथा च स्मरन्ति– ‘मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् । इतरेषां तु वर्णानां स्त्रीधर्मोऽयं व्यवस्थितः ॥’ इति । न च स्मृतेः मनुवचनानुमितायाः अनन्यथासिद्धत्वेन आचारस्यैव बलवत्त्वम् इति वक्तव्यम् । यतः स्मृतेः साक्षादेव श्रुत्यनुमानम् । आचारस्य तु असमर्थमाणस्य अनाचरणीयत्वात् तद्विषयं तावत् आचरितृस्मरणम् । ततश्च अपरापरपूर्वपूर्वभाविनानाविधाचरितृस्मृत्यनुमानपरम्परया मन्वादिस्मृत्यनुमानम्, ततश्च श्रुत्यनुमानम् इति बहुतरविप्रकर्षात् न तुल्यबलत्वं नतरां आचारबलीयस्त्वमिति । तदुक्तम्– ‘आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पना । तेन द्व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते ॥’ इति (वा पृ २२० । ‘श्रुतिर्निश्चीयते ततः’ इति द्वितीयचरणपाठः आनन्दाश्रमीये)। न च मन्वादिस्मृतेरिव आचरितृस्मृतेरपि साक्षादेव श्रुतिमूलत्वम्, मन्वादयो हि महर्षयः प्रकृष्टज्ञानतया विप्रकीर्णनानाशाखागतां तत्तदाचारमूलभूतां श्रुतिमनुसृत्य स्मृत्वा स्वनिबन्धने प्रतिपादयन्ति इति युक्तम्, न ■ आचरितारः सर्वे नानावेदशाखाऽनुसरणक्षमाः । किंतु मन्वादिमहर्षिसङ्कलितमेव अर्थं पूर्वपूर्वाचरितृपरम्पराऽऽयातमवगम्य स्मृत्वा आचरन्ति इति सम्भवति । तेन यत् पूर्वाधिकरणे शिष्टाचारस्य श्रुतिमूलत्वेन प्रामाण्यमभिहितम्, तत् मन्वादिस्मृत्यविरुद्धस्यैव इति एतदधिकरणतात्पर्यम् । तेन न वक्तव्यं ‘व्यभिचारादद्यतनाचारस्य क्वचिदपि न प्रामाण्यम्’ इति, एवम्भूताचारस्य अव्यभिचारादिति । प्रयोजनं– पूर्वपक्षे स्मृतिविरोधेऽपि यथाचारमनुष्ठानं कर्तव्यम् । सिद्धान्ते तु न कर्तव्यमिति । सूत्रं तु– शास्त्रस्था ये मन्वादयः तेषामेव स्मरणं बलवत् तन्निमित्तत्वादेव शिष्टाचारस्येति । ठौना १।३।५

प्रणीता हि स्मृति सोपनिबन्धना । तस्यास्तेन बलीयस्त्वमाचारान्निर्निबन्धनात् ॥' ( निबन्धनत्वतो निरूढार्णरत्व – परस्परागततत्त्व–सिद्धवन्निर्देश–कल्प्यत्वादिना निरोहितान् विधीनुपसङ्गृह्य तदनिष्पाद्य कर्मणा कर्तव्यत्वकथनम् । सोम ) । प्रत्ययिततरा हि मन्वादय स्मर्तार । तस्मात्तत्र गुणवत्तरकर्तृकत्वात् इतरजनचारिभ्यत् विश्रम्भणीयतरम् । इति न्यायमेतत् । अपि च आचरितृणां जनानां स्वयमितस्ततो विप्रकीर्णं परप्रकरणादिगतश्रुत्युद्धरणेन अर्थं प्रतिपत्तुमसामर्थ्यात् अवश्यमेते महर्षिभिरेव ज्ञात्वा स्मृत्वा समर्पितमर्थं अनुतिष्ठन्ति इत्यङ्गीकार्यम् । अतश्च आचारस्य स्मृतिकल्पनेन श्रुतिकल्पनत्व इति व्यवहितप्रामाण्यात् दुर्बलत्वम् । अपि च आचारेषु कर्मस्वरूपमात्रमेव प्रत्यक्षम्, कर्तव्यता तु निमर्शपूर्वक अर्थमुत्पादिदेहेव तत्रावगत निरूपणेन पारिशेष्यात् कल्पयितव्या । सा च कल्पिता पश्चात् मूलकल्पन इति विप्रकर्षे । सनिबन्धनासु तु स्मृतिषु प्रागेव प्रत्यक्ष कर्तव्यता गम्यते, मूलमात्र तु कल्प्य इति संनिकर्षे । सर्वेषां च स्मृतिविरुद्धाचाराणां मातुलसुतापरिणयनादिविषयाणां क्षमादिहेत्वन्तर स्पष्टमेव दृश्यते इति न कथंचिदपि श्रुतिमूलत्व समाकलनीयम् । न चात्र विकल्पाभ्युपगमेन उभयोरपि प्रामाण्य संभवति, वस्तुनि विकल्पासंभवात् । न हि मातुलसुतापरिणयनात् प्रत्यवायश्चो स्वाचिरतुलचित्र संभवति इत्यवश्य अन्यतरस्याप्रामाण्यमाश्रयणीयम् । तत्र गृह्यमाणनिमित्तस्य आचारस्य अप्रामाण्य इति सिद्ध प्रत्यवायकानां दुराचारत्वम् । १।३।४ पृ ३३–३४

वि— 'सा मातुलविवाहाग्नी शिष्टाचार स मा न सा ।, इत्याचारत्वमात्र – समात्र स्मार्तनाधनात् ॥ स्मृतिमूले हि सर्वत्र शिष्टाचारस्तत्पदत्व च । अनुमेया स्मृति, स्मृत्या बाध्या प्रत्यक्षया तु सा ॥'

भाट्ट— यत्र मातुलकन्यापरिणयादौ स्मृत्याचारयो र्विरोध स्तोभयोरपि श्रुतिमूलत्वात् तुल्यत्वम् । इति प्राप्ते, स्मृतीनां सद्यस्तन्मूलत्वात् स्मृतीनु कर्तव्यतावितिविधिप्रत्यक्षश्रवणाच्च बलीयस्त्वम् । आचारेषु तु आचरितृणां जनानां मन्वाद्यपेक्षया तथा प्रत्ययितत्वाभावात् इतस्ततो विप्रकीर्णशाखाप्रकरणादिगतश्रुत्यवगमस्याशक्यत्वात्, परकीयाचारमात्रदर्शनेन कर्तव्यतावाविविधिप्रत्ययस्य अवश्यकल्पनीयत्वाच्च दौर्बल्यम् । अत एव इदानींतनाचारदर्शनेन श्रुतिवत् स्मृतिकारस्य स्मृतिं तदुपदेशं वा कल्पयित्वा स्मृतिकल्पनम्, स्मृतीनां तु साक्षादेव इति विशेष । अतश्च स्मृतिविरोधे आचारस्य यावच्छ्रुतिदर्शन स्मृतिदर्शन वा अननुष्ठानम् ।

मण्डन— कुमारिलमतेन अत्राधिकरणे स्मृतिसदाचारयो प्रामाण्यतारतम्य निवारितम् । उभयोरपि वेदमूलत्वात् तुल्यमेव प्रामाण्यमिति पूर्वपक्षे, स्मृते साक्षात् वेदमूलत्वात् सदाचारस्य च स्मृतिद्वारैव वेदमूलत्वकल्पनासंभवात् स्मृतेरेव बलवत्तर प्रामाण्यमिति सिद्धान्त ।

शाबर— 'स्मृत्याऽऽचारस्य बाध स्यात् ।'

● स्मृत्यादिकल्प्य प्रतिषेध द्विविध, क्रत्वर्थ पुरुषार्थश्च । क्रत्वर्थोऽपि द्विविध, पुरुषार्थमात्रविषयक क्रतुमात्रविषयकश्चेति । बाल पृ ११, ● स्मृत्यादिकल्प्य प्रतिषेध पुनर्द्विविध, अदृष्टार्थ दृष्टार्थश्चेति । पृ ११

● स्मृतिकल्प्य प्रतिषेधो यथा– सगोत्रां न परिणेत् । बाल पृ २९

= स्मृतिग्रन्थेऽपि आम्नायशब्दप्रयोग । वा १।३।३।७ पृ २११

● स्मृतिज्ञान बाह्य वस्तु न गृह्णाति, असुगमभासित्वात्, बाह्यस्य च स्फुटरूपत्वात् । न च ग्राहकसमष्टीमेदेन स्फुटास्फुटाभासमेद, यद्यामेदात् । अतो बाह्यमासासामेऽपि तद्व्यवसायिना उपजायमान तदालम्बनमिव माति स्मृतिज्ञानम् । इति बौद्धा । ऋजु पृ ४१

● स्मृतित श्रुतेर्नेदिष्ठी । भा १२।३।७।१९

● स्मृतित्वं ज्ञातविषयज्ञानत्वम्, संस्कारजन्यज्ञानत्वं वा। मणि. पृ. १३.

● स्मृतित्वानुभवत्वयोः विरुद्धयोः एकज्ञानवृत्तित्वं न संभवति। मणि. पृ. ३०.

● स्मृतिपादः प्रथमाध्यायस्य तृतीयः, आचारोऽपि अत्रैव। ‘ विध्यर्थवादस्मृतयो नाम चेति चतुर्विधम्। प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम् ॥ ’ वि. प्रस्तावना श्लोकः १३. ● स्मृतिपादे ( १।३ ) स्मृतिमूलविचारः प्रकरणार्थः। तथाहि, ‘ स्मृतीनां श्रुतिमूलत्वं, विरोधे भ्रान्तिमूलता। दृष्टोपनीतस्मृत्यादावविरोधं निरूप्य च ॥ आर्यैर्विरोधे म्लेच्छानां शब्दार्थविषयस्मृतेः। भ्रान्तिमूलत्वमत्रेऽत्र विवादो लोकमूलता ॥ मूलापेक्ष च कल्पादेरप्यनवस्थितगोचरम्। होलाकादिस्मृतेर्मूलमुक्तं चान्दस्मृतेरपि ॥ ’ इति। सु. पृ. ३७०.

● स्मृतिप्रणेतॄणां त्रैवर्णिकत्वं कल्प्यते वैदिकपदार्थकर्तृभिस्त्रैवर्णिकैः, स्मार्तानां पदार्थानां क्रियमाणत्वात् तेषां च अत्रैवर्णिकोक्तपदार्थानुष्ठातृत्वस्याभावदर्शनात्। सु. पृ. १९५.

● स्मृतिप्रामाण्यं तदर्थानुष्ठितशिष्टत्रैवर्णिकदृढपरिग्रहान्यथानुपपत्तिप्रसूतया अर्थापत्त्या वेदमूलत्वकल्पनेन साधितम्। सु. पृ. १२४. ● स्मृतिप्रामाण्ये विचिकित्सा न कार्या ‘ पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्। आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥ ’ इति निषिद्धत्वात्। पृ. १३६.

● स्मृतिप्रामाण्यहेतुः शिष्टत्रैवर्णिकपरिग्रहादरः। सु. पृ. १७०.

● स्मृतिवचनेन न श्रुतिवचनं युक्तं बाधितुम्। भा. ६।१।४।१७. ● स्मृतिवचनेन बन्धत्वदार्थ्याश्रयेण, दुर्बलप्रमाणं वेदवाक्यं बाध्यते ‘ क्षुते आचामेत् ’ ‘ वेदं कृत्वा वेदिं करोति ’ इति। बाल. पृ. १४०.

● स्मृतिविरुद्धानां मातुलसुतापरिणयादीनामननुष्ठानप्रतिपादनम्। भाट्ट. १।३।८ वर्णकं २.

● स्मृतिविहितेषु नियमादिषु उपनीतस्याधिकारो नानुपनीतस्य। वि. ६।२।६.

● स्मृतिशब्दस्य धर्मशास्त्रेष्वेव प्रसिद्धिः। सु. पृ. १२१.

● स्मृतिहेतोः संस्कारस्य सर्वदानुच्छेदः। वा. ३।१।७।१४ पृ. ८९९.

■ स्याच्छ्रुतिलक्षणे नियतत्वात्। ६।३। १५।३३ ॥

‘ यदि सोमं न विन्देत् पूतीकानभिषुणुयात् ’ इति यत्र प्रतिनिधिः श्रुतः, तत्र प्रतिनिधेरपचारे प्रतिनिधिसदृशस्य उपादानं कर्तव्यं इति पूर्वपक्षी आह। श्रुतिलक्षणे श्रुतिर्लक्षणं प्रमाणं यस्य तादृशे पूतीकद्रव्ये विनष्टे सति प्रतिनिधेः प्रतिनिधिः स्यात्। नियतत्वात् पूतीकानां तत्सदृशमेव द्रव्यमुपादेयं स्यात् न सोमसदृशम्। तस्मात् अत्र प्रतिनिधौ प्रतिनिधिः इति पूर्वः पक्षः।

‘ स्याच्छ्रुतिलक्षणे ’ इत्येतावदेव सूत्रं कुतूहले। अनुवृत्त्या तु अर्थपूरणं भवति।

न तदीप्सा हि। ३४ ॥

सोमापचारे श्रुतिविहिताः पूतीका ग्राह्याः। अथ पूतीकापचारे पूतीकसदृशः प्रतिनिधिः नोपादेयः। हि यस्मात् पूतीकविधिनाऽपि तदीप्सा सोमावयवानामेव कतिपयानामपि ईप्सा आप्तुमिच्छा प्रदर्शिता। तथा च पूतीकापचारे पुनः सोमसदृशमेव पूतीकभिन्नं द्रव्यमपेक्षणीयम्। इति सिद्धान्तः। के.

■ स्युर्वा होतृकामाः। १०।२।२२।५६ ॥

होतृकामाः पठिताः ग्रन्थे ‘ यं कामयेतापशुमान् स्यादिति पराचीं तस्येडामुपह्वयेत, अपशुमानेव भवति ’ ‘ य कामयेत वर्षीयान् स्यादिति उत्तमेनास्य याज्याया वषट् कुर्यात् ’ इत्यादयः। एते होतृकामाः अस्थिरयो स्युर्न वा इति विचारे ‘ स्युः होतृकामाः ’

पशुत्वाज्ञुमांस्येषु निम्न एव संमार्ज्यः पूर्वपक्षे, सिद्धान्ते तु सर्वः, संस्कारस्य प्रतिप्रधानावर्तित्वात् । वा. २।१।४।१२ पृ ४१५.

● स्रुवः अपभिचरितक्रतुसम्बन्धवान् । वि. ३।६।१. ● स्रुवः खादिरः, अत्र फलश्रुतिः अर्थवादः न फलप्रयुक्तता, क्रत्वर्थः सः । भा. ४।३।१।१-४. ● स्रुवः खादिरः अनारभ्यविहितः प्रकृतौ निविशते, विकृतौ तु चोदकात् । वि. ३।६।१, ● स्रुवः द्रव्यद्रव्यावदाने करणम्, सामर्थ्यात् । १।४।२०. ● 'स्रुवेणाव द्यति, स्रुवेणाज्यमाज्यावद्यति, स्रुवेण पार्वणौ जुहोति' । वा. ३।६।१।१. ● 'स्रुवेणावद्यति' 'स्वधितिनाऽवद्यति' 'हस्तेनावद्यति' इति । अत्र आज्य–मांस–पुरोडाशेषु हविःषु स्रुवादि अवदानहेतवो नियताः । शक्तिरत्र नियामिका । 'अञ्जलिना सक्तून् प्रदाय जुहुयात्' अत्राञ्जलिः न नमस्कारकालिक इव भाव, अशक्तेः किंतु सक्तुग्रहणशक्ततया प्राप्तोऽञ्जलिर्भावः । वि. १।४।२०. ● 'स्रुवेणावद्यति' 'स्वधितिनाऽवद्यति' 'हस्तेनावद्यति' इति श्रूयते । तत्र संदेहः किं स्रुवेणावदातव्यं सर्वस्य द्रव्यस्य शृतस्य मांसस्य च । तथा स्वधितिना, हस्तेन च उत सर्वेषामर्थतो व्यवस्था द्रवाणां स्रुवेण, मांसानां स्वधितिना, शृतानां हस्तेनेति । तत्र अर्थतो व्यवस्था इति सिद्धान्तः । भा. १।४।१८।२५. ● स्रुवेण दीक्षाहुतयो हूयन्ते । वि. १०।२।४.

● स्रुवाधिकरणम् ( स्रुवादिरत्वविधिः प्रकृतिगामी ) । ३।६।१।१-८. मीको. पृ. ३७३ 'अनारभ्याधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । ● स्रुवाधिकरणे ( ३।६।१।१-८ ) वाक्यशेषवत् सामर्थ्यस्यापि संदिग्धनिर्णायकत्वेन धर्मप्रमोपयोगो व्युत्पादितः । सु पृ ३९८.

● स्रुवादिशब्दानां आकृतिवचनत्वम् । वा. ३।६। ५।१५.

● स्रुवधर्मैः स्वधितिः स्रुवधर्मा भवति । भा. ६।३।१०।२६.

● स्रेनपर्णशब्दस्याभियुपेपगवस्य कात्स्न्येंनोद्धरणप्रकाशकत्वम् । भा. ९।४।५।२५-२७.

▣ स्वं महिमानमावह इति गार्हपत्यवादः ।।

'स्वं महिमानमावह' इत्यत्र स्वशब्दस्य आत्मीयपरत्वेन सर्वोषधीयाहवनीयपरत्वावश्यम्भावात् तन्निष्ठस्य होतृत्वयष्टृत्वादिधर्मनिरस्यैव महिमरूपतया तद्धर्मविशिष्टो भवत्येतदर्थकोऽयं निगद आहवनीयपर एव । इति प्राप्ते, अथ 'यत्त्वं महिमानमावाहयति वायुं तदावाहयति वायुर्वा अग्ने स्वो महिमा' इति श्रौतिके अनन्तरोत्पुरदस्य च 'वायोरग्निः' इत्यादिश्रुत्या जनकपरत्वेनाहवनीयजनकगार्हपत्यपर एवायं निगदः । होतृत्वादिधर्माश्च देवतात्वोद्धुरवेनाहवनीय इव हव्यवोढृत्वेन गार्हपत्येऽपि संभवन्तीति न ते आहवनीयासाधारणाः । 'अग्ने यक्ष त्विषो अध्वरस्य होत. पावकशोचे वेषृत्वं हि यज्वा' इति स्विष्टकृत्यपि प्रयोगात् । तस्मादेकस्यैव गार्हपत्यस्य हव्यवोढृत्वेनाहवनीयजनकत्वेन चावाहनम् । आवाह्यतावच्छेदकभेदादावृत्तेरप्रवृत्ति । तेन पितृमेधे वाक्यद्वयस्यापि स्थाने 'अग्निं च यवाहनमावह' इत्येक एव निगद. । संकर्षे. ४।२।१२.

▣ स्वाङ्गं स्वव्यवधायकं न भवतीति न्याय. । स्रुवः । साहस्री. १६०.

▣ 'स्वाङ्गुष्ठमपि चुम्बन्तीक्षुदण्डमयाचत' इति न्यायः । यत्र श्रौतस्मार्तसनातनधर्मानभिज्ञवर्णाश्रमभ्रष्टा मूर्खा जनाः स्वस्वप्रीतिगोचरेभ्यः स्वाभिलषितार्थतृष्णाग्रस्तेभ्यः आचार्याभासेभ्यो निजाभीष्टार्थान् याचन्ते तत्रायं चरितार्थ इति । साहस्री. ८०.

● 'स्वाधीने शब्दप्रयोगे किमिति अवाचकं पदं प्रयोक्ष्यामहे' 'अदितिः पाश०' 'अदितिः पाशान्०' इति । प्रकृतौ यथा श्रुत्या एकस्योपस्थितिः न तथा विकृतौ द्वित्वोपस्थितिः इति प्राकृतश्रुतिनाशात् तदुद्दारकस्य बहुवचनस्यापि वाचे द्वित्वप्रकाशनरूपकार्यानुरोधेन शब्दद्विवचनप्रक्षेपावश्यम्भाव. । 'स्वाधीने० प्रयोक्ष्यामहे' इति न्यायात् । भाट्ट. ९।३।४, ▣ 'प्रयगा वाहू' इत्यत्र सिद्धान्ते 'स्वाधीने शब्दप्रयोगे०' इति न्यायेन प्रयाजान् वाहून इत्यूहः, पूर्वपक्षे च प्रयाजैः इति द्रष्टव्यम् । ९।४।४.

• स्वार्थं अनुमानं परामर्शेन स्वस्यैव (अनुमातुः) साध्यज्ञानजनकम् । मपि. पृ २९. • स्वार्थे सामान्यतोदृष्टमनुमानम् । स्वार्थं विशेषतोदृष्टमनुमानम् । बाल. पृ. ८. • स्वार्थे प्रवर्तते जन्तुः । को हि परार्थं प्रयत्नमातिष्ठेत् । पुरुषः स्वार्थेन करोति । भा. ११।१।१।१ पृ. २०९९, • स्वार्थे हि सर्वं क्रियते, न परविशेषणार्थेन । भा. ९।४।६।२८.

• 'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥' (२।१।११।२८ सूत्रे वार्तिकं पृ. ३६६)। पदानां परस्परमन्वयाकाङ्क्षापर्यवसानेऽपि वाक्यार्थानां परस्परापेक्षया अन्वयो न विरुद्धः इत्याशयः । भावनान्वयेन संबन्धाभिधानात् अङ्गस्य अङ्गिसंबन्धापेक्षया अङ्गिनश्चाङ्गसंबन्धापेक्षया आग्नेयादिप्रधानानामेकफलसंबन्धापेक्षया अङ्गानां च एककर्तृकत्वाद्येकसंबन्धापेक्षया स्वार्थपर्यवसितानामपि वाक्यानां संहत्य एकमहावाक्यार्थप्रतिपादनेन एकवाक्यत्वं भवतीत्यर्थः । अङ्गप्रधानवाक्यैः सहार्थवादानां चैकवाक्याभिधानेन सूचितमेतत् । सु. पृ. १२५, • 'स्रुग्धारया' इत्येतावतो वाक्यभागमात्रेण श्रवणात् तद्विशेषणार्थोऽपि लिङः कर्मणि च ' इत्येतावत. 'स्वार्थबोधे समाप्तानां०' इत्यनेन न्यायेन वाक्यान्तरैकवाक्यत्वेऽपि वाक्यभेदस्यावधारणात् तद्विशेषोऽस्यावगतेः(समानुरा)प्राप्तिः । पृ. १४२९.

• स्वात्मानं निर्वृतं कृत्वा धर्मानुष्ठाने यजमानो धर्मादेव भेदो लभते । ऋजु. पृ ११७. • स्वात्मनि क्रियाविशेष. । वा. २।२।५।१४.

⁋ स्वकरकुचन्यायः । यथा स्वकरेण स्वकुचयोर्मर्दने युवती सुखं न सुखं लभते, तथा जिज्ञासुरपि न स्वकल्पितचारेण ज्ञानमाप्नोति, किन्तु आचार्यद्वारा तल्लाभं करोति 'आचार्यवान् पुरुषो वेद' इति श्रुतेरिति । मादरी. १४६.

• स्वरादावुत्तरो लोप. । इतीच्छन्त्यनुसृत्यापि उत्तरं तदुत्तरं वा न दर्शितमेतत् । सत्याभो. ८।८। २७ स्तोत्रम्.

⁋ स्वकाले स्यादविप्रतिषेधात् ।५।४।५।१५॥

यन्त्रराजगर्भिणीरूपस्य अधिकरणस्य पूर्वपक्षसूत्रम् । 'यः सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तुं प्रतीक्षेत न नक्षत्रम्' इति किं आधानकालस्य निषेधः उत सोमकालस्येति विचारे पूर्वपक्षमाह । 'उत्कर्षाद् ब्राह्मणस्य सोमः स्यात्' (५।४।४।१०) इति सूत्रात् सोमः इति पदं अनुवर्तते । सोमः स्वकाले स्यात् । आधानकालस्य तु बाधः स्यात् अविप्रतिषेधात् अङ्गकालबाधे विरोधाभावात् । प्रधानकालबाधे तु विप्रतिषेधः स्यात् ।

अपनयो वाऽऽधानस्य सर्वकालत्वात् । १६ ॥

सिद्धान्तसूत्रम् । सोमपूर्वाधानपक्षे सोमकालस्यैव 'नर्तुं प्रतीक्षेत न नक्षत्रम्' इत्यनेन अपनयः बाधः स्यात् । आधानस्य सर्वकालत्वात् 'यदहरेवैनं श्रद्धोपनमेत् तदहरादधीत' इत्युक्तत्वेन आधानकालस्य अप्रसक्तत्वात् प्रतिषेधो न कर्तव्यः । सर्वस्मिन् काले आधानं कर्तव्यम् । वा-शब्दः पूर्वपक्षनिरासार्थः । तस्मात् सोमकालस्यैव बाधः । के.

• 'स्वकाले स्यादविप्रतिषेधात्' (५।४।५।१५) इत्यधिकरणे तन्त्ररत्ने 'यदा कदाचन कदाचनोपनमेदथादधीत अथ यजेत' इति शतपथवाक्यस्य ज्योतिष्टोमे कालान्तरविधित्वोक्तेः तच्छेषस्य 'अपहतपाप्मानो वा ऋतवः' इत्यस्य कालविधिरूपत्वं अर्थादुक्तम् । बाल. पृ. ५६.

⁋ स्वजातिर्दुरतिक्रमेति न्यायः । अत्र गाथाऽस्ति । यथा- गङ्गातटे कस्यचिन्मुनेरञ्जलौ श्येनमुखात् परिभ्रष्टा मूषिका पतिता, मुनिश्च तां दृष्ट्वा दयार्द्रहृदयो निजतपोयोगबलेन मानवीं कन्यां कृत्वाऽनपत्यायै स्वभार्यायै दत्तवान् । सा तया पालिता युवती यदा जाता । ततस्तत्परिणयाय यत्किंचित् सूर्यपर्जन्यमारुतगिरीनाहूय मुनिः स्वकन्यामुवाच- पुत्रि, एतेष्वन्यतमं वरय । सा तानकुलीनतिरस्कारक-पृथ्वीवर्जनकारक-अतिचलनात्मक-कठिनस्वरूपात्मकत्वात् निरस्य अनुरागं न चकार । ततः स मुनिर्मूषकमाहूय कन्यां प्राह- पुत्रि, एनं वरय । ततः सा मूषकं दृष्ट्वा प्रसन्ना सती मुनि-

मुवाच— भगवन् मा पूर्ववन्मूषिका कृत्वा मूषकाय देहि । मुनिना तथैव कृतम् । उक्तं च— 'सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम् । स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥' इति । साहस्री. ८०८.

■ 'स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता' इति न्यायः । अयं श्रीहर्षोक्तिरूपः । अस्यार्थः— हि यतो यस्मात् सतां साधूनां परार्थता परोपकारित्वं स्वत एव स्वभावत एव भवतीति शेषः । यथा— ग्रहणानां ज्ञानानां स्वतः यथार्थता प्रामाण्यम् । ज्ञानानां स्वतः प्रामाण्यं न तु परत इति मीमांसकाः । यद्वा गृह्यन्ते ज्ञायन्ते अर्थाः एभिरिति ग्रहणानि इन्द्रियाणि, तेषां यथार्थता— अर्थाननतिक्रम्य वर्तिता, स्वस्वार्थग्राहकतेत्यर्थः । यथा श्रवणादीनीन्द्रियाणि संनिकृष्टशब्दाद्यर्थमन्यमनपेक्ष्यैव प्रत्यक्षयन्ति, तथा साधवः परस्य प्रेरणमनपेक्ष्यैवोपकुर्वन्तीति भावः । साहस्री. ९७३.

● स्वतस्त्वं प्रामाण्यस्य कारणगुणसंवादार्थक्रियाज्ञानानधीनत्वम् । याथार्थ्यघटितप्रामाण्यस्य स्वतस्त्वम् । कु. १।१।५।५ पृ. ७.

● स्वतःप्रामाण्यं नाम कारणगुणसंवादार्थक्रियाज्ञानानधीनत्वम् । बाल. पृ. ५–६. ● स्वतःप्रामाण्यं विधेः अबोधकत्व–सापेक्षत्वयोरप्रामाण्यकारणयोरभावात् । वि. १।१।५, ● स्वतःप्रामाण्यं विधेर्धर्मे । १।१।५.

● स्वतःप्रामाण्याभ्युपगमाद् विधिवाक्यानाम्, क्वचित् फलादौ प्रमाणान्तरापेक्षा नास्ति । वि. १।१।५.

● स्वतःप्रामाण्यवादिनां मते प्रमाणस्य सापेक्षता नास्ति । वि. १।२।३.

● स्वत्वम् । न च स्वाममात्रेण देवतास्वत्वं भवति । परिग्रहणेन हि स्वस्वामिसंबन्ध आपद्यते । भा. ३।१।१५।४४. ● स्वत्वं यथेष्टविनियोगयोग्यत्वलक्षणम् । सु. पृ. १५३४.

● स्वत्वोपायः अनन्यपरिगृहीततृणादिवत् परिग्रहाख्यः । सु. पृ. १५२८.

● स्वत्वपरित्याग–परस्वत्वापादनरूपो विक्रयेऽपि । या. ३।४।१०।२८ पृ. ९६१.

■ स्वदाने सर्वमविशेषात् । ६।७।१।१॥

विश्वजिति यागे श्रूयते 'सर्वस्वं ददाति' इति । तेन यद्यत् स्वस्य स्वीयस्य दानं कर्तव्यं तद्यथा धनं, माता, पिता, भूमिः इत्यादयः यावत्-किंचित् स्वीयम्, तत् सर्वं दातव्यम् । अविशेषात् । इदं देयं इदं न देयं इति विशेषोक्तेरभावात् । इति पूर्वः पक्षः ।

यस्य वा प्रभुः स्यादितरस्याशक्यत्वात् । २ ॥

विश्वजिति यागे सर्वस्वदाने पित्राद्यपि स्वीयत्वात् देयं इति पूर्वपक्ष सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । न पित्रादि देयम् । किंतु यजमानः यस्य स्वीयस्य प्रभुः स्यात् तदेव देयम् । इतरस्य यस्मिन्नास्ति प्रभुत्वं तस्य दातुं अशक्यत्वात् न देयता । न च पुत्रः पितुः प्रभुः । तस्मात् पित्रादि न देयम् । अत्र 'यस्य वा प्रभुरनभिस्तरस्याशक्यत्वात्' इति कुतूहलपाठोऽपि साधीयान् । के.

● स्वपरिज्ञानबुद्धिर्हि निःश्रेयसे । बृहती. पृ. १६७.

■ स्वप्रकाशाश्रयन्यायः । यथा स्वेतरादाभित-प्रभारूपद्रव्यस्य च सत्यपि भेदे तेजस्त्वरूपसाजात्येनाऽभेदकथा प्रवृत्तेऽपि । साहस्री. १५८.

■ स्ववतोस्तु वचनादैककर्म्यं स्यात् । ६।१।४।१७ ॥

अन्तरायाभिव्यधिकरणे सिद्धान्तसूत्रम् । दंपती उभावपि स्ववन्तौ द्रव्यवन्तौ । तयोः स्ववतोरपि सतोः ऐककर्म्यं स्यात् । उभौ संभूय यजेयातां न पृथक् पृथक् । 'धर्मे चार्थे च कामे च नातिचरितव्या' इति स्मृतिवचनात् । तस्मादुभयोः सहाधिकारः ।

लिङ्गदर्शनाच्च । १८ ॥

अन्तरायाभिव्यधिकरणस्य सूत्र 'दंपत्योः कर्मणि सहाधिकार.' इति सिद्धान्ते लिङ्गबोधकम् । चत्वारो देवन्तरसमुच्चयार्थाः । 'योक्त्रेण पत्नीं संनह्यति, मेखलया यजमानं मिथुनत्वाय' इत्यत्र मिथुनत्वेन संस्तुतिः कृता । तदिदं दंपत्योः सहाधिकारे लिङ्गं दृश्यते तस्मात् दंपत्योः सहाधिकार सिद्धान्तः । के.

यज्ञाङ्गे क्रतूपकारो नियमः, सूक्तवाकप्रशास्त्रायुरादिकं स्वन्वाचयफलम्, तद्वदिति। भाष्ये तु क्रतौ क्रतुकाम कामयेत यज्ञाङ्गादौ तु यज्ञाङ्गकाममित्यादिकल्पसूत्रकारव्यवहारात् यज्ञाङ्गशब्दो गोदोहनादिपरतया व्याख्यातः।

वि— 'श्रुताश्रुते श्रुतं वेक्षं सौर्ये सर्वप्रयुक्तये। आद्यो मैव श्रुतेनैव फलाकाङ्क्षानिवर्तनात्॥'

भाट्ट— यत्र श्रुतब्रह्मवर्चसादिफलकेऽपि शास्त्रस्य महाविषयत्वलाभार्थं स्वर्गकल्पना, ब्रह्मवर्चसादिकं तु आयुरादिवदानुषङ्गिकम्, तत्र किं काम्यं तानि इति शङ्का मन्दविषन्यायेन शिष्यहितार्थं परिहर्तुं सूत्रम्। फलाकाङ्क्षायाः श्रुतफलेनैव शान्तेरुद्देश्यानेकत्वनिमित्तवाक्यभेदप्रसङ्गाच्च न स्वर्गकल्पना। महाविषयत्वाभावस्तु विशेषश्रवणे न दोषः। आयुरादौ प्रमाणद्वयसत्त्वादानुषङ्गिकत्वेऽपि प्रकृते तदनुपपत्तेश्च।

मण्डन— 'तत्तत् श्रुत फल काम्ये।'

शंकर— 'न स्वर्गस्तु फले श्रुते।'

● 'स्वव्यापारे हि विधिना पुरुषो विनियुज्यते।' इति न्यायात् विधिः पुरुषव्यापाररूपां भावनामाक्षिपति। को. १।४।३।१ पृ. १७९.

● स्वशब्दः अयं आत्मीयवचनशतीनां प्रत्येकं वाचको न समुदायस्य। भा. ६।७।१।२. ● स्वशब्दः नाम कार्यापत्तिप्रमाणम्। बाल. पृ ८. ● स्वशब्दात् कार्यापत्तिः। 'परिधौ पशुं नियुञ्जीत' इति स्वशब्देनैव यूपकार्ये परिधिर्निर्दिश्यते। टुप्. ९।२।१२।४०.

● स्वशाखाविहितेन परशाखाविहितं बाध्यते, अप्राप्तबाधः। भा. ३।३।७।१४ पृ. ८६०, ● स्वशाखाविहितेन परशाखाविहितं बाध्यते। यथा उदितहोमादि अनुदितहोमादिना। बाल. पृ. १४१.

● स्वशाखाविहितज्ञानस्य स्वाध्यायाध्ययनजनितस्य कर्माङ्गत्वात् तत्सम्भवे इतरस्यानाक्षेपः। बाल. पृ. ९१.

● स्वसामर्थ्यप्रवृत्तैस्तु ब्राह्मणपदैः शक्त्या शक्त्यनपेक्ष अङ्गत्वं अभिधीयते। वा. ३।१।७।१४ पृ. ८२५.

सू स्वस्थानात्तु विवर्धेरन् कृतानुपूर्व्यत्वात्। ५।३।२।३॥

अग्निष्टोमे तिस्र उपसदः। अग्निचयने तु षडुपसदः। तत्र किं तिसृणां दण्डकलितवदावृत्तिः, एकदा क्रमेण तिस्रः, पुनस्ता एव क्रमेण तिस्र इति उत स्वस्थानविवृद्धिः, प्रथमा द्विवारं मध्यमा द्विवारं तृतीया च द्विवारं इति। इति विचारे दण्डकलितवत् आवृत्तिः इति पूर्वपक्षे तत्सूत्रे प्राप्ते, सिद्धान्तमाह। तुशब्दः पक्षव्यावृत्तिमाह। उपसदः स्वस्थानात् स्वस्वस्थानात् विवर्धयितुमर्हन्ति। कृतानुपूर्व्यत्वात् प्रकृतौ कृतं क्लृप्तं आनुपूर्व्यं क्रमो याभ्यः तादृशत्वात् चयनेऽपि स्वस्थानविवृद्ध्या अनुष्ठाने एव तदनुसरणसम्भवात्। दण्डकलितवदावृत्तौ तु क्लृप्तं आनुपूर्व्यं बाध्येत तृतीयाया अनन्तरं प्रथमायाः करणप्रसङ्गात्। के.

● स्वस्थानविवृद्धिः प्रपाठकाध्ययनवत्। एकं भागमनेकशस्त्वावर्त्य, द्वितीयो भागोऽनेकशस्त्वावर्तनीयः, एवं तृतीयो भाग. इति। वि ५।३।१, १०।५।२५. ● स्वस्थानविवृद्ध्या अभ्यासो गवामयने व्यनीकायाः। १०।५।२५।८३–८७. मीको. पृ. १९७९ 'व्यनीकाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। ● स्वस्थानविवृद्ध्या उपसदभ्यासापत्तिः न तु दण्डकलितवत्। भा. ५।३।२।३. ● स्वस्थानविवृद्ध्या प्रयोगो द्वादशाहे दीक्षाणामुपसदां च। टुप्. ११।४।५।१८.

न्या 'स्वशिश्नमपि चुम्बन्तमिक्षुदण्डमयाचत' इति न्यायः। तादृशात् मूर्खात् इक्षुदण्डप्राप्तिः स्वाभिलषितप्राप्तिरित्यर्थः, न भवेदेवेति। न्यासं.

● स्वतन्त्रे महाव्रते ताण्ड्यादिभिरहतवाससः समुच्चयः। १०।४।७।१३–१५. मीको. पृ. ३१३९ 'महाव्रते ताण्ड्यादिभिः' इत्यत्र अधिकरणं द्रष्टव्यम्।

● स्वतन्त्रार्थवादकल्प्यः प्रतिषेधो द्विविध.— दोषार्थवादकल्प्यः सिद्धवत्कीर्तनार्थवादकल्प्यश्चेति। बाल. पृ. १०, ● स्वतन्त्रार्थवादकल्प्य. विधि. (प्रमाण) त्रिविध —फलार्थवादकल्प्यः, सिद्धवत्कीर्तनार्थवादकल्प्यः, उपाख्यानार्थवादकल्प्यश्च। पृ. १२.

● स्वतन्त्रकामनायामेव पशूद्देशेन विहितं पशुप्रयोज्य गोदोहनं कर्तव्यम्। भाट्ट. ४।१।२ वर्णकं १.

निद्रा मिथ्याभावस्य हेतुः स्वप्नादौ, स्वप्नान्ते च सुप्तस्याभाव एव । प्रबुद्धो ह्यवगच्छति निद्राक्रान्तं मे मन आसीदिति । स्वप्नेऽपि सुपरिनिश्चितावासीत् ( बुद्धि. ) प्राक् प्रबोधात् स्वप्ने विपर्ययदर्शनात् । भा वृत्तिग्रन्थे १।१।५।५ पृ. २९–३०.

स्वप्नव्याघ्रन्याय. । यथा– स्वप्ने दृष्टो व्याघ्रः स्वप्ने विलाप्य तत्र वर्तमानेन व्याघ्ररूपेण स्वयमपि विलीयते, एवं प्रकृतेऽपि । साहस्री २७२.

• स्वप्नसुखं अनिरूपितनिमित्तम् । रत्नाकरः, पृ. २२०.

स्वभावो दुरतिक्रमः इति न्यायः । स्पष्टः । साहस्री. २७१.

स्वभावो मूर्ध्नि वर्तते इति न्यायः । स्पष्टः । साहस्री. ७४१.

• स्वभावसिद्धः कर्मणा फलं प्रति गुणभावः । भा ७।८।१।१.

स्वभावसिद्धन्यायः । अयम् ' स्थानेऽन्तरतम. ' ( पा. १।१।५० ) इतिसूत्रमहाभाष्ये भणित.– " तद्यथा– ' सभासु समासेषु समवायेषु चास्यताम् ' इत्युक्ते, नैव कृशा. कृशैः सहासते, न पाण्डवः पाण्डुभि., येषामेव किंचिदर्थकृतमान्तर्यं तैरेव सहासते । तथा– गावो दिवसं चरितवत्यो यो यस्याः प्रसवो भवति तेन सह शेरते । तथा यान्येतानि गोयुक्तकानि संघुष्टकानि भवन्ति तान्यन्योन्यमपश्यन्ति शब्दं कुर्वन्ति । एवं तावच्चेतनावत्सु, अचेतनेष्वपि । तद्यथा– लोष्टः क्षिप्तो बाहुवेगं गत्वा नैव तिर्यग्गच्छति, नोर्ध्वमारोहति, पृथ्वीविकारः पृथिवीमेव गच्छत्यान्तर्यत. । तथा– या एता आन्तरिक्ष्य. सूक्ष्मा आपस्तासां विकारो धूमः, धूमः आकाशे निवाते नैव तिर्यग्गच्छति, नार्वागवरोहति, अब्विकारोऽप एव गच्छत्यान्तर्यत. । तथा ज्योतिषो विकारोऽर्चि. आकाशदेशे निवाते सुप्रज्वलितो नैव तिर्यग्गच्छति, नार्वागवरोहति, ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः " इति, तथा प्रकृतेऽपि । उक्तं चान्यत्रापि– ' घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं, छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम् । दग्धं दग्धं पुनरपि पुन. काञ्चनं कान्तवर्णं, न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥ ' इति । साहस्री. ४४१.

स्वयमशक्तः कथं परान् साधयिष्यतीति न्याय. । यथा– चाक्षुषदर्शनाभावमितस्य दृष्टौ, मैत्रीं वा शुभाशुभफलज्ञानसामर्थ्यं नास्तीति केषाञ्चित् ज्योतिर्विदां मतम् । साहस्री. १५४.

• स्वयमातृण्णोपधाने वरदानमन्त्रौ. कर्म अग्निचयने । मि. ३।८।२.

स्वयं तीर्णः परांस्तारयतीति न्यायः । यथा संतरणविद्याकुशल. स्वयं तीर्णः परानपि तारयितुं शक्नोतीति, तथा गुरुः शिक्षानुशिष्टः स्वशिष्यान् शिक्षयतीति भाव । साहस्री. ५४४.

• स्वयं यष्टुर्यजमानस्य मधुग्रहाभिः ज्योतिष्टोमे ऋतुयाजेषु । भाट्ट. ३।८।१८.

स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् । १०।६।२।३॥

' रथंतरे प्रस्तूयमाने संमील्येत् स्वर्दृशं प्रति वीक्षेत ' इति श्रूयते । रथंतरे साम्नि आरभ्यमाणे नेत्रसंमीलनं उद्गात्रा कार्यम् । ' अभि त्वा शूर नोनुमः ' इति रथंतरस्य योनिभूता ऋक् । तस्या उत्तरार्धे ' ईशानमस्य जगतः स्वर्दृशं ' इति स्वर्दृशं प्रति स्वर्दृक्शब्दोच्चारणकाले वीक्षेत नेत्रोन्मीलनं कुर्यात् इत्युक्तम् । तथा च इदं स्वर्दृशं प्रति वीक्षणं तदवसान कालमात्रं स्यात् स्वर्दृक्शब्दोच्चारणकाले वीक्षणं कर्तव्यं इति कालार्थः संयोगः । साम्नः परार्थत्वात् देवतास्तुत्यर्थत्वात् । तस्मात् कालार्थ. संयोग इति सिद्धान्तः । उत्तरयोरृचोरपि आदित आरभ्य संमीलनम्, स्वर्दृक्शब्दो यावति भागे योनौ, उत्तरयोरपि तावति भागे वीक्षणं इति ज्ञेयम् । के.

• ' स्वर्दृशं प्रति वीक्षेत ' । अत्र सूत्र. । प्रतिशब्द. कर्मप्रवचनीयत्वात् स्वर्दृक्शब्दस्य ( वीक्षण प्रति ) लक्षणमाचष्टे श्रुतिः । तत्र हि लक्षणभूतप्रत्ययः

(दीक्षण-स्वर्दृग्शब्दयो) प्रयोजनप्रयुक्त इति गृह्यते एव दृष्टविशेष । भा १०।६।२।३ पृ १९८७ ● 'स्वर्दृश प्रति वीक्षेत' इति स्वर्दृक्शब्द-वीक्षणयो सयोग कारणम् । स्वर्दृक्शब्दोच्चारण काले उद्गाता चक्षुरुन्मीलयत्, यत् प्रस्तवकाले सम्मीलितम् । १०।६।२।३

● स्वर्दृक्-शब्देन वीक्षणस्य कालावता । वि १०।६।२

● स्वर्दृक्शब्दोच्चारणस्य मीलनकालावधितायोत कत्वम् । भाट्ट १०।६।२

● स्वर्लोके तैजसप्राया देहा पुण्यप्रभान्विता । आप्यायन्त विकारेण भानवीयेन तेजसा ॥' वा ३।१।७।११ पृ ७०२

● स्वर । अनभ्यासाम्ना अनुव व्यादिसाम्ना च स्वरूपत प्राप्तो यथावदमेव स्वरो युक्त । सु पृ ११८३ ● स्वर । आधानमाम्ना याजुर्वेदिकप्रधान विधिविहितत्वात् उपांशुत्वम् । वा ३।३।२।९ पृ ८१३ ● स्वर उपांशु उच्चैस्त्व च चोदकपूर्वप्रयुक्तो न ज्योतिष्टोमपरमापूर्वप्रयुक्त । भा ९।१।२।३ वर्णक २, ● स्वर ऋग्वेदस्य उच्च, यजुर्वेदस्य उपांशु, साम वेदस्य उच्चै । ३।३।१।१ ● स्वर । ऋग्वेदसाम वेदयो यत् किंचित् काम्य नैमित्तिक वा चोद्यते तत् सर्वमुच्चै कर्तव्यम् । एव याजुर्वेदिकमपि उपांशु व मुदाहर्तव्यम् । वा ३।३।२।० पृ ८१३, ● स्वर । क पुनरिह विनियोगस्वरस्याधार ? उच्यते । य आद्यन्तसगोक्तत्वाभ्या विकृती वेदा तदीयमपूर्वमङ्ग माचक्ष इति । या विकृतिर्यस्मिन् वेदे भवति तस्या दीपनस्वरस्तु यथाप्रकृति प्राप्तु यस्मिन् वेदेऽङ्गतरम पूर्वं चोद्यते स विषय इति । प्रधान विषय । ३।३।२।९ पृ ८१३ ● स्वर जपादिमन्त्र ■ प्रसमाम्नायसिद्धो म्राह्य । १२।३।८।२०-२२ मीमां पृ ३०५७ 'भाषास्वराधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम् । ● स्वर ज्योतिष्टोम उपांशु, याजुर्वेदत्वात् । 'ज्योति ष्टोमेन स्वर्गकामो यजेत' इतिवाक्यस्य यजु सामवेदयो

राम्नातत्वेऽपि सोमद्रव्यस्य, वाय्वादिदेवतानाम्, अङ्ग बाहुल्यस्य च यजुर्वेदे श्रवणात् सामवेदे गुणविधा नायानुवादात् । वि ३।३।३, ● स्वर ज्योतिष्टोमे दीक्षणीयाया अप्रधानतरापूर्वप्रयुक्त एव न परमापूर्व-प्रयुक्त । ९।१।२ वर्णक २, ● स्वर ज्योतिष्टोमे दीक्ष णीयादौ अग्नीषोमीयात् प्राक् उपांशु । स चाङ्गविषय, न प्रधानविषय । ९।१।६, ● स्वर । ज्योतिष्टोम यजु र्वेदोक्तत्वा ऋचोऽपि उपांश्वेव पठनीया । 'उपांशु यजुषा' । यजुषा यजुर्वेदेनेत्यर्थ । ३।३।१, ● स्वर ज्योतिष्टोमे 'यावत्या वाचा कामयेत तावत्या दीक्षणीयाया मनुब्रूयात्, मन्द्र प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्, उपांशूपसत्सु, उच्चैरग्नीषोमीये' इति । ९।१।२ वर्णक २ ● स्वर । ज्योतिष्टोम वाचनिकसवनविभागविहितमन्द्र मध्यमोत्तमोच्चारणावधारणम्, दीक्षणीयादिप्रधानमात्र तु 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनु ब्रूयात्, मन्द्र प्रायणीयायाम्, मन्द्रतरम तिथ्यायाम्, उपांशूपसत्सु' इति । अग्नीषोमीये तु सवनविभाग स्वरणैव 'मन्द्रयाऽऽज्यभागान्त' इत्यादिप्राकृतस्वर प्रतिप्रसव । सवनविभागतुल्य वा । वा ३।३।२।९ पृ ८१२, ● स्वर । दर्विहोमेषु सर्वेषु 'उपांशु यजुषा' इत्यनेन । ३।३।२।९ ● स्वर । दर्शपूर्णमासयो मन्द्रया आज्यभागा त पर मध्यमया उत्तमया अनु याजादि' इति । ३।३।२।९ पृ ८११ ● स्वर । दीक्षणीयादिपरिसमाप्तु 'प्राचीनमग्नीषोमीयात्' इत्यने नोपांशुत्वम् । ३।३।२।९ ● स्वर मन्द्र प्रायणीयाया स च प्रायणीयापूर्वप्रयुक्तो न परमापूर्वप्रयुक्त । भा ९।१।२।३ वर्णक २ ● स्वर — 'मन्द्र प्रात सवने चरति' इत्यादिसाम्यया सवनाना आधारत्वप्रतीते, कर्ममध्ये अनुष्ठानादेव च कर्मणामाधारत्वप्रतीते, कर्मकाले च अनुष्ठान विना अनुष्ठानस्य कर्ममध्यत्वा सिद्ध, सवनकाले यत् प्रयुज्यते तत्र सर्वत्र मन्द्रादि विध्यवगमात् सवनीयादिष्वपि यथासवनमेव स्वरा भवति । सु पृ ११८० ● स्वर मन्द्रतर आति थ्याया स चातिथ्यापूर्वप्रयुक्तो न ज्योतिष्टोमपरमा

पूर्वप्रयुक्तः । भा. ५।१।२।३ वर्णके २, ● स्वरः ‘ यावत्या वाचा कामयीत ’ इत्यादिना विहितः अङ्गापूर्वप्रयुक्त एव न परमापूर्वप्रयुक्तः । ५।१।२।३ वर्णके २. ● स्वरः । येषां प्राकृतानामङ्गानां प्राकृतः स्वरः, तदन्या विकृतौ चोदकेन प्रयोगवचनबाधात्, प्रयोगवचनं च विना प्रधानधर्मप्राप्तेः अपूर्वे अङ्गे स्वरभेदस्यानुपपत्तिः । सु. पृ. ११८१. ● स्वरः लोके नास्ति । ‘ न च लोके प्रयुक्तानां पदानां दृश्यते स्वरः । ’ वा. १।३।८।२४ पृ. २६७. ● स्वरः वाङ्नियमः । ‘ उच्चैः प्रवर्ग्येण ’ इति करणविभक्तिनिर्देशात् साङ्गस्योच्चैस्त्वम् । टुप्. ५।१।६।२९. ● स्वरः वाङ्नियमः । ‘ यावत्या वाचा कामयेत ’ इत्यनेन दीक्षणीयाशब्दवाच्ये वाङ्नियमो विधीयते । स दीक्षणीयाशब्दः प्रधानमात्रे वर्तते नाङ्गेषु, तस्मादुपांशुत्वमङ्गेषु, प्रधानेषु ‘ यावत्या वाचा ’ । टुप्. ५।१।६।२५ । ( यावत्या वाचा इति— ) स धर्मः प्रधानेषु भविष्यति, दीक्षणीयादिषु प्रधानशब्दोपबन्धनात् । तथोक्तेन प्रधानवर्जितेषु अङ्गेषु निवेक्ष्यते । भा. ५।१।६।२५. ● स्वरः । विकृतिषु अहीनादिषु नानावेदस्वरस्य अपूर्वमङ्ग विषयः । सु पृ. ११८१, ● स्वरः वैदिकेषु पदेषु नियतः, लौकिकेषु अनियतः । पृ ३३२, ● स्वरः । यज्ञेषु एकाहाहीनसत्रेषु ज्योतिष्टोमिकस्वरन्यायः । पृ. ११८०–८१, ● स्वरः वचनान्तरगते दर्शनीयादौ सोमादौ च यथावचनम् । पृ ११८०. ● स्वरः । गुणोपसंहारानि पान्याङ्गानि तेषु तत्र प्रकरणाभावात् यथावेदमेव स्वरः इति आश्वयुज्यादीनामपि उपांशुत्वसिद्धिः । वा ३।३।२।६. ● ‘ स्वराः त्रिविरेकश्च ’ शिक्षावाक्यम् । संकर्ष. ४।१।४. ● स्वरस्य, आग्नीध्रीयात् भौम्यादिनामवचनमात्रा प्राचीने दीक्षणीयादौ दर्शपूर्णमेव । वि. ५।१।६. ● स्वरस्य दीक्षणीयापूर्वप्रयुक्तत्वम् । भा. ५।१।१।२ वर्णके २. ● स्वरस्य भाषिकस्य नियम. श्नौ ब्राह्मणोदयमन्त्रेषु । १२।३।१०।२३–२४. मीको. पृ. १४९७ ‘ षष्ठी ब्राह्मणोत्पन्नानां प्रत्याख्या॰ ’ इत्यत्र अधिकरणे द्रष्टव्यम् ।

● स्वराभावात् नैतत्सम्यङ्निबन्धनम् ( कल्पसूत्राणि ) । भा. १।३।६।१२.

● स्वरोच्चारणे दोषाः । ‘ ग्रस्तं निरस्तं निहतावलम्बिते अम्बूकृतं ध्मातमथो विकम्पितम् । संदष्टमेणीकृतमर्धकं द्रुतं विकीर्णमेताः स्वरदोषभावनाः ॥ ’ इति स्पृष्टप्रयत्नप्रयुक्तादिदोषवर्जित–नियतह्रस्वादिकालाभिव्यङ्ग्यवर्णाभिव्यक्तिक्रमाद्येषु धर्मेषु अभियुक्तानां साधुशब्दप्रयोगात्, तद्विपरीतेषु च असाधुशब्दप्रयोगात् अवश्यं तत्रानेन किंचित् व्यवस्थितं वक्तव्यम् । सु. पृ. ३०६ । ( ‘ ग्रस्त ’ इत्यादेरर्थः— ग्रस्तं जिह्वामूले निगृहीतम् । निरस्तं निष्ठुरम् । निहतं रूक्षम् । निर्हतं इति महाभाष्ये कैयटे च पाठः । अवलम्बितं वर्णान्तरसंमिश्रम् । अम्बूकृतं यो व्यक्तोऽपि अन्तर्मुख इव श्रूयते । ध्मातं श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव लक्ष्यते । विकम्पितं कम्पयुक्तम् । संदष्टं वर्धितमिव । एणीकृतं अविशिष्ट विभय ओकारः अथ ओकार इति यत्र संदेहः । अर्धकं दीर्घमपि ह्रस्वमिव । द्रुतं झटिति उच्चारितम् । विकीर्णं वर्णान्तरे प्रसृतम् । एकोऽपि अनेकनिर्भासि इत्यपरे । इद कैयटोक्तम् ॥ अत्र केचित् स्वरूपार्थं अन्यथा व्याख्यायते । ग्रस्तं यदक्षरं निगीर्णमिव भाति । निरस्तं यत् मुखाद्बहिः पतितमिव भाति । निहतं बाधितम् । अम्बूकृतं सनिष्ठीवं इत्यपरः । संदष्टं दन्तैः खण्डितमिव । कै. ) । अन्येऽपि केचिद्दोषा महाभाष्ये उक्ताः । यथा संवृतः कलः प्रगीत. उपगीतः क्ष्विण्णः रोमशः इति । तत्र एकारादीनां संवृततरं दोषः । कल. स्थानान्तरनिष्पन्नः, काकलीत्वेन ( सामशास्त्रे ) प्रसिद्धः ( यथा चतुर्थश्रुतिस्थः अपि षड्ज. तृतीयश्रुतिस्थत्वेन गीयमानः ) । प्रगीतः सामवदुच्चारितः । उपगीतः समीपवर्णान्तरगीतानुरक्तः । क्ष्विण्णः कम्पमान इव । रोमशः गम्भीरः । इति कैयटः । इमौ भाष्यपठितौ वर्णदोषौ ॥ पुनश्च सुपामन्तं आरभटिशीलोच्चारणम् । निरस्त विरोधिवर्णयोगम् । अम्बूकृतं सनिष्ठीवम् । संवृतकलध्मातैणीकृतक्ष्विण्णरोमशादीनां आदिशब्देन ( वार्तिकस्थेन ) ग्रहणं इति । सु. पृ. ३१८.

* स्वरचर्चा । ' उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना ' । वि. ३।३।१ । उत्पादकवेदस्वरात् विनियोजकवेदस्वर. प्रबलः । ३।३।२ । उपांशुत्व याज्येष्टिषु प्रधाने एव, अङ्गेषु तु तत्तद्वेदानुसारेण स्वनिः । ३।८।२० । ऋचोऽपि यजुर्वेदगता उपांशु पठनीयाः । ३।३।१. ● स्वरचर्चा । पा— पृ. ८११–८१३ । ननु याजुर्वेदिकज्योतिष्टोमाङ्गानां स्तोत्रशस्त्रादीनामपि अनेनैव न्यायेन उपांशुत्वं प्राप्नोति । सत्यं प्राप्नोति, वचनात्तु सर्वत्र स्वरान्तरलाभः । कथम् ? दर्शपूर्णमासयोस्तावत् वेदद्वयविहितेषु अङ्गेषु नानावेदस्वरे प्राप्ते गुणमुख्यव्यतिक्रमन्यायेन याजुर्वेदिकप्रधानधर्म. उपांशुत्वं प्राप्नोति, ततो वाचनिकः स्वरो भवति ' मन्द्रया आज्यभागान्तं ', ' परं मध्यमया ', ' उत्तमया अनुयाजादि ' इति । तथा विकृतीनां इष्टिपशुसोमादीनां प्रतिकृतिवत् प्राकृते स्वरत्वे प्राप्नुवति प्रत्यक्षोपदेशवशेन प्रधानवेदस्वरप्रसक्तौ ' तद्ग्रहणाद्वा स्वधर्मः स्यात् ' इत्यनेन न्यायेन प्रयोगवचनस्य चोदकापेक्षितत्वेन दुर्बलत्वात् चोदकप्रापितस्वरग्रहणमेवेष्टम् । एवं ज्योतिष्टोमाङ्गानामपि दीक्षणीयादीनां प्राकृते स्वरे प्राप्ते प्रत्यक्षोपदेशवशेन बाध्यमाने चोदकलभ्यत्वेन पुनरुत्थिते ज्योतिष्टोमस्य याजुर्वेदिकत्वात् कर्तृकारप्राकृतधर्माग्रहणाच्च गुणमुख्यव्यतिक्रमन्यायेनैव तद्गतोपांशुत्वधर्मप्रसङ्गे सति ' यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात् ' इत्येते स्वरा गुणमुख्यव्यतिक्रमन्यायबाधेनैव अङ्गानां प्राप्ताः । तत्र ज्योतिष्टोमस्य वाचनिकसवनविभागविहितमन्द्रमध्यमोत्तमोच्चारणावधारणात् तदङ्गानामपि सर्वेषां प्राकृततुल्यमन्द्रमध्यमोत्तमोच्चारणान्येव प्रधानद्वारेण प्राप्तानि । ततो ' यत्किंचित् प्राचीनमग्नीषोमीयात् तेन उपांशु चरन्ति ' इत्युपांशुत्वे साङ्गानां दीक्षणीयादीनां प्राप्ते प्रधानमात्रनाविदीक्षणीयादिवाक्योद्देशेन विहिताः प्रधानमात्रेषु एते स्वरविशेषा भवन्ति ' यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्, मन्द्रं प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्, उपांशूपसत्सु ' इति । तत्र उपांशुत्वस्य पूर्वेणैव सर्वव्यापिना उपांशुत्वविधिना प्राप्तत्वात् दीक्षणीयादिस्वरप्रसार्यः नित्यानुवाद एव । अग्नीषोमीये [illegible] सवनविभागस्वरेणैव ' मन्द्रया आज्यभागान्तम् ' इत्यादिप्राकृतस्वरप्रतिप्रसवः । सवनविभागतुल्यं वा साङ्गं प्रयोगं त्रेधा विभज्य मन्द्रमध्यमोत्तमोच्चारणसंपादनं कार्यम् । एतेन अनूबन्ध्या–अवभृथ–उदयनीया–उदवसानीयास्वपि उच्चारणविशेषा व्याख्याताः । सुत्याकालवर्तनीयादीनामपि एव स्वरे प्राप्ते प्रातःसवनाद्यन्तर्गतत्वात् यथासवनमेव स्वरा भवन्ति । ननु सवनशब्दानां सोमयागावयववचनत्वात् दीक्षणीयाद्यङ्गानाम् तदीयस्वरप्रसङ्ग इति चेत्, न, सप्तमीनिर्देशेन तत्कालप्रयुज्यमानत्वमात्राश्रयणात् । ' यदि षष्ठी भवेदत्र सवनेभ्यः परा ततः । तदङ्गमन्त्रमात्रेषु मन्द्रत्वादिविधिर्भवेत् ॥ सप्तम्या तु तदाधारो यावान्मन्त्रः प्रयुज्यते । तस्य सर्वस्य मन्द्रादिस्वरयोगोऽङ्गमाश्रितः ॥ केचिदाहुर्यदाधारमात्रत्वं सवनेष्विह । तदा तेषां न मन्द्रादिः स्यादनाधेयताश्रुतेः ॥ आधारे सवने भिन्नं यद्याधेयतया श्रुतम् । सवनीयादि तस्यैव मन्द्राद्युच्चारणं भवेत् ॥ स्तोत्रशस्त्रानुवाक्यादिदोषस्तु सवनस्य यः । षष्ठ्यभावात्र तस्यैते युक्ता मन्द्रादयः स्वराः ॥ इत्युक्ते नैष दोषोऽस्ति यतः षष्ठ्या विनाऽप्ययम् । षष्ठ्यर्थः संभवत्येव तदाधारत्वकल्पितः ॥ यथा हि शकुनिर्वृक्षे पुष्पाद्यपि तथेष्यते । तत्राधेयधर्मोऽर्थः स वृक्षेऽपि विधीयते ॥ यदि वा स्तोत्रशस्त्रादि कृत्स्नं सुत्याङ्गमेव नः । आधार एव तस्यापि सवनानीतराङ्गवत् ॥ नानावेदस्वरत्वस्मात् स्तोत्रादेः प्राप्त आदितः । प्रधानाङ्गतया पश्चादुपांशुत्वेन बाधितः ॥ ततो वाचनिकेनैव यथासवनभाविना । मन्द्रादिना समस्तानि सुत्याङ्गानि प्रयुञ्महे ॥ ' एतेन सर्वे ज्योतिष्टोमविकाराः ( एकाहाहीनसत्राणि ) व्याख्याताः ।

क्व पुनरिदानीं नानावेदस्वरस्यावकाशो भविष्यति ? उच्यते । 'तद्ग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्याद्यजतः शेषे' इतिवत् कल्पनीयः । यत् प्रकृतस्वरानुगुणतया विकृतौ वेदान्तरीयमपूर्वमङ्गं चोद्यते इति । ननु तथापि गुणमुख्यव्यतिक्रमन्यायेन प्रधानधर्मभाव एव । (पक्षान्तरं शङ्कते–) एवं तर्हि या विकृतिः यस्मिन् वेदे भवति तस्याः शेषेष्वङ्गेषु यथाप्रकृति प्राप्तेषु यत् तस्मिन्नेव वेदे अङ्गान्तरमपूर्वं चोद्यते स विषय इति । (शङ्कते–) सोऽपि प्रधानद्वारेणैव सम्बन्धात् । (पक्षान्तरं शङ्कते–) तदेव तर्हि प्रधानं विषय इति, न, तस्यापि प्राकृतावरुद्धत्वात् ।

न तर्हि प्रधानद्वारेण अपूर्वस्याङ्गस्य प्राप्तिः इति तदेव विषय इति । नैवमपि य. प्रधानस्य धर्मः तस्यैव तत्रापि भावात् ।

अपि च नैषां विभक्तेषु यजमानधर्मे च स्वरे स्थिते यदपूर्वमपि तद्गाग्रगाति भवति तस्य न पृथगुच्चारण-वहिस्तुल्यत्व इति भवितव्यमेव प्राकृतेन धर्मेण । तस्मादपि नास्ति विषयः । प्रैषसमाम्नानं च अत्यन्तमेवानर्थकं स्यात् । (शङ्काद्वयमपि परिहरति–) अत्र समाधिः । 'उच्चानु यजुषा' इति तावत् सर्वदर्विहोमेषु अर्थवत् । ऋक्सामवेदयोरपि काम्यनैमित्तिकेष्वङ्गेषु अर्थवत्ता । 'मन्द्रं प्रातःसवने' इत्यादि हि नित्यप्रयोगात् अनित्यैः काम्यनैमित्तिकैः अभरव्यमानं नित्यानुवियमेव भवति । तेन यत् ऋग्वेदसामवेदाभ्यां किंचित् काम्यं नैमित्तिकं वा चोद्यते तत् तौ उपांशु कर्तव्यम् । तथा 'तं विप्रमभिमृशेत् यदा विद्विष्यित' इत्यादि । एवं याजुर्वैदिकमपि उपांशुत्वमुदाहरणम् । तथा यानि सूत्रोक्तस्वरप्रावानि अङ्गानि तेषु गानप्रयोगाभावात् यथावेदमेव स्वर इति अवभृथसामादीनामपि उपांशुत्वसिद्धिः । अन्यथा हि यथेष्टं प्रयोगः स्यात् । दीक्षणीयादिपरिमाणस्तु 'प्राचीनमवीतेऽधीयत्' इत्यनेन उपांशुत्वम् । प्रवर्ग्यसाम्नां पुनः 'उच्चैः साम्नेति' इत्येवं उच्चैस्त्वम् । आधानसाम्नां याजुर्वैदिकप्रधानविधिविहितत्वादेव उपांशुत्वम् । 'य एवं विद्वान् सामवेदेन गायति' इत्यादीनि यजुर्वेदवाक्यान्येव । शा. ३।३।२।९ पृ. ८११–८१३.

● स्वरनियमः 'यावत्या वाचा कामयीत तावत्या वाचा दीक्षणीयाया॰' इति, न ज्योतिष्टोमापूर्वार्थः किंतु दीक्षणीयापूर्वार्थ एव । बाल. पृ. १४२.

● स्वरविशेषेण उदात्तादिना बहुव्रीहि– तत्पुरुषसमासादिनिश्चये अर्थविशेषोऽवबोद्धुं शक्यते । वि. ९।२।८ वर्णकं १.

● स्वरशब्दस्य 'मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्' (पाणिनीयशिक्षा श्लो. ७) इत्यादिदर्शनात् ताल्वोष्ठसंयोगविभागजनितनादरूपध्वन्यपरपर्यायघोषात्मकशब्दपरत्वं अवगम्यते । सु. पृ. ८६२.

● स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेन अन्वितौ भवतः (स्याता इति यास्के मूलपाठः) । भा. १०।४।१७।३४.

● स्वरसामा प्रथमः आग्रयणाग्र, द्वितीयः ऐन्द्रवायवाग्र., तृतीयः शुक्राग्रः । टुप्. १०।५।२५।८५.

● स्वरसामानः त्रयः दिवाकीर्त्यमभितः गवामयने, अहरात्रे पृष्ठ्यः षडहः द्वौ स्वरसामानौ । तौ च द्वौ तेषां प्रकृतौ धर्मौ प्राप्नुतो । भा. ७।३।१०।२६.

**स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् । ७।३।१०।२७॥**

स्वरसामा च एककपालश्च आमिक्षा च तेषां समाहारः स्वरसामैककपालामिक्षम् । एते शब्दाः धर्मातिदेशकाः । गवामयने 'अभितो दिवाकीर्त्यमहः त्रयः स्वरसामानो भवन्ति' इति । संवत्सरसत्रस्य मध्यमं अहः विषुवान् नाम । तत्र दिवाकीर्त्यम् । तन्नामकानां साम्नां दिवैव पठनीयत्वात् । तस्य दिवाकीर्त्यस्य अह्नः अभितः पुरस्तादुपरिष्टाच्च त्रयस्त्रयः स्वरसामानो नाम सोमयागविशेषा भवन्ति इति । तेषां 'सप्तदशा भवन्ति' इत्यादयो धर्मा विहिताः । सप्तदशत्वं सप्तदशस्तोमकत्वम् । अन्यत्र च 'पृष्ठ्यः षडहः द्वौ स्वरसामानौ' इति अहरात्रे श्रुतम् । तस्य च वाक्यशेषे 'यत् तृतीयं सप्तमाहमहः तत् त्रयस्त्रिंशस्य

द्यावापृथिव्यं एककपालं विधाय आह, 'यत् सर्वहुतं करोति सा त्वेषा परिचक्षा, हुतोऽहुतः पर्यग्निते सा द्वितीया, आज्यस्यैव द्यावापृथिव्यो यजेत' इति आज्यविधिपरे वाक्ये सर्वहोमपर्यग्निकृतं च वैश्वदेविको धर्मौ प्राप्तौ दर्शयति । तथा मैत्रावरुणामिक्षाया 'न वाजिनेन प्रचरन्ति' इति वाजिनेज्या वैश्वदेविकं धर्मं प्रतिषेधत् ततो धर्मप्राप्तिं दर्शयति । एतेभ्यो लिङ्गेभ्यः एतत् ज्ञायते यथास्वं धर्मा आहृता इति । प्रतिषेधदर्शनं वाजिनेज्या, किमृकर्मपुरुषं मत्वा एतदुक्तम् । आह । लिङ्गमपदिष्टम् । कुतः प्राप्तिरिति । उच्यते । लक्षणया प्राप्तिः, लिङ्गात्तु लक्षणापरिग्रहः ।

( चोदनासामान्याद्वा ॥ २८ ॥ )

[ अत्र 'स्वरसामैक०' सूत्रोत्तरं 'चोदनासामान्याद्वा' इति सूत्रं सु-पुस्तकयोर्नास्ति । इतरत्र तु सर्वत्र विद्यते एव । आन्येऽपि आनन्दाश्रमीये तत्सूत्रं सदीपभाष्यत्वेन च कियानपि ग्रन्थोऽपि मुद्रितः । एवमेव म-ता पुस्तकयोरपि । परन्तु एतत्सूत्रीयभाष्यत्वेन मुद्रितो ग्रन्थो न कथंचिदपि सूत्रार्थेन संबध्यते । 'लिङ्गात्तु लक्षणापरिग्रहः स्वरसामैकत्वसामान्यात्' इत्यादिरेकः सन् ग्रन्थः संशोधकैर्मध्ये एव च्छेदितः । तदिदं सर्वमप्रधानमूलकमिति मन्यामहे । नेदं सूत्रं भाष्येण व्याख्यातमिति च । सु- सत्रगयो चाननुवृत्ते । तथापि 'यस्य लिङ्गमर्थसंयोगात्' इत्यत्र ( ८।१।२।२ ) वर्तमानेन 'चोदकमपश्यमनुमापयता लिङ्गेन' इति विचारकथनेन 'का पुनश्चोदना लिङ्गनिमित्तस्यातिदेशस्य आश्रयितव्य नामधेयस्याप्राप्तेः' इति तन्त्रवार्तिकेन च स्वरसामसूत्रवार्तिकमतात्पर्यतया ज्ञापकेन 'चोदनासामान्याद्वा' इति सूत्रं सार्थकमिति श्रद्धा संभवतीति । तेनैव भाष्यत्रुटितः स्यादिति रसोऽस्यार्थम् । के. ]

स्वरसामत्वसामान्यात् एककपालत्वसामान्यात् आमिक्षासामान्याद्वा । 'यस्य लिङ्गमर्थसंयोगात्' ( ८।१।२।२ ) इत्यनेन प्राप्तिरिति ।

टुप्— अन्यायादापत्तावशङ्क्य इदमारभ्यते । नामधेयेन अतिदेशः । स्वराणि सामानि अस्येति । यथैव गवामयने गुणविधिः तथा इतरत्रापि 'पृष्ठ्यः षडहः द्वौ स्वरसामानौ' इति । आमिक्षैककपालयोरपि द्रव्यविधित्वात् गुणविधी । एवं गुणविधित्वात् अतिदेशाभावे प्राप्ते 'यस्य लिङ्गमर्थसंयोगात्' ( ८।१।२।२ ) इत्यनेन अतिदेशः प्राप्यते ।

भा— अनन्यगतिभ्यो लिङ्गेभ्यः स्वरसामत्वादिचोदनाशब्दोपबृंहितेभ्यः तद्विज्ञानम् ।

सोम— चोदनालिङ्गात् विशेषातिदेशस्य आष्टमिकत्वात् नामधेयापवादप्रसङ्गात् अत्र संगतिः । गुणविधित्वात् स्वरसामादिशब्दानां अतिदेशकत्वाभावेऽपि चोदनालिङ्गात् अतिदेशमादाय गवामयनिकादिविचारदत्तं युक्तं इति सिद्धान्तः । अत्र माधवीये (विस्तरे) 'सवन्विहस्य स्थानमभिव्याहरन्ति' इति लिङ्गात् अतिदेशविधिरित्युक्तम् । तत्रापि स्वरसामत्वोत्कर्षविधानैव तात्पर्यम्, न विनियोगे इति द्रष्टव्यम् । अत्र वाजिनयागस्य प्रधानत्वात् अङ्गत्वाभावेनानतिदेशात् वाजिनयागप्रतिषेधदर्शनरूपं लिङ्गमयुक्तं इति कुतश्चिन्त्यमिदं इति केचिदाहुः, तदयुक्तम् । वाजिनयागस्य वाजिनापत्ते द्रव्यप्रयोजनानत्वा अप्रधानस्य निरपेक्षामिक्षायागविधिः सहाधिकारविधिविषयत्वाभावेन वाजिनस्य प्रतिपत्त्यर्थतया स्विष्टकृदादिवत् अङ्गत्वस्यैव युक्तत्वात् । सूत्रार्थस्तु— स्वरसामैककपालामिक्षा च प्रयुक्तलिङ्गदर्शनात् गवामयनिकवैश्वदेविकधर्मग्राहकमिति ।

वि— 'न विशेषा विशेषा वा स्वरसामादयो, न हि । वैश्वदेवाग्नेयौ, मैत्रावरुणगतिलिङ्गतः ॥'

भाट्ट— पूर्वमुत्तरवेदिप्रतिषेधरूपेण लिङ्गेन सौमिकप्रणयनातिदेशे निरस्ते अधुना लिङ्गादपि अतिदेशोऽस्ति इत्येवं तदपवादः प्रस्तूयते । गवामयने 'त्रयः स्वरसामानः' इति अतिरात्रसंमता सामानः समाम्नाताः । अन्यत्रापि 'द्वौ स्वरसामानौ' इति । तथा वैश्वदेवे पर्वणि 'वैश्वदेव्यामिक्षा द्यावापृथिव्य एककपालः' इति सधर्मकौ यागौ । अन्यत्रापि 'मैत्रावरुण्यामिक्षा वाय एककपालः' इत्यादावामिक्षैककपालद्रव्यका यागाः श्रुताः । ते किं स्वरसामानः गवामय-

र्थैक्याद्भिन्नगुणव्यवहारस्तथैव नास्ति, तर्हि भिन्नो घट इत्यत्रापि गत्यैक्यात् भिन्नव्यवहारोऽन्यथैव न भवेत्, अतः स्वरूपातिरिक्तभेदाङ्गीकारो न युक्तः ।

ननु स्वरूपस्य प्रतियोग्यपेक्षा वक्तव्या, तत्र विकल्प्यते— किं स्वरूपाद्भिन्नः प्रतियोगी, किंवा अभिन्न इति । न तावदभिन्नः, स्वस्यैव स्वस्य प्रतियोगित्वप्रसङ्गात् । न च भिन्नः, भेदे सति प्रतियोगित्वसिद्धिः, प्रतियोगित्वसिद्धौ च भेदसिद्धिरितीतरेतराश्रयत्वम् । अथ भेदान्तरेण भिन्नः प्रतियोगी, तर्ह्यनवस्थाप्रसङ्ग इति । नैवम्, धर्मभेदवादिनोऽपि प्रतियोगित्वापेक्षत्वमस्त्येव तत्राप्येष विकल्पो दोषश्च समानः, यस्तत्र परिहारः स एवात्रापि ।

ननु स्वरूपभेदवादः प्रतीतिविरुद्धः । तथाहि, 'पटाद्भिन्नो घटः' इति विशेषणत्वेन भेदः प्रतीयते, भवतस्तु स्वरूपातिरेकेण भेदाभावाद्विशेषणभूतोऽर्थो नास्त्येव, अतः 'भेदी घटः' इत्येव व्यवहारः स्यात्, न 'भिन्नो घटः' इति । नैवम्, भेदिनो भिन्नो भेद इत्यत्र भेदव्यतिरेकेण विशेषणभूतो भेदो नास्त्येव, तथापि भिन्नो भेद इति ।

अथ भेदस्य भेदान्तराभावेऽपि प्रतियोगित्वापेक्षस्वरूपं विशेषणम्, भेदमात्रं विशेष्यमिति, तर्हि 'भिन्नो घटः' इत्यत्रापि प्रतियोगित्वापेक्षस्वरूपस्यैव विशेषणत्वं स्वरूपमात्रस्य विशेष्यत्वमिति तुल्यचर्चं, पाचकादिशब्दवत् । यथा 'पाचको देवदत्तः' इत्यत्र पाचकव्यक्तिष्वनुगतमेकं सामान्यं गुणो वा नास्त्येव, तथापि तदन्यभूतपचनक्रियोपलक्षितपाचकव्यक्तिषु पाचकशब्दो वर्तते । न हि पाचकशब्दस्य पचनक्रियार्थः । एवं प्रतियोग्युपलक्षितस्य विशेषणत्वाङ्गीकारादेव प्रतीतिविरोधोऽपि नास्त्येव ।

यदुक्तम्, भेदघटशब्दयोः पर्यायत्वप्रसङ्ग इति, तदपि भिन्नो भेद इत्यत्रापि समानम् । तथाप्युच्यते, प्रतियोगित्वापेक्षस्वरूपस्य भेदशब्दप्रवृत्तिनिमित्तत्वात् न पर्यायतेति ।

अयोग्यत्वेन । भेदस्य विदारणात्मकत्वात् स्वरूपस्यैव विदारणात्मकत्वाङ्गीकारादन्यस्यापि तथैव प्रसङ्गात् शून्यवादप्रसङ्ग इति, नैवम्, भेदस्य विदारणात्मकत्वेऽपि यस्माद्यस्य भेदव्यवहारः तस्मात् तस्यैव विदारणात्मकत्वम्, न हि सर्वस्मात् सर्वस्य भेदव्यवहार इति न तत्र विदारणात्मकत्वम्, अतः उपेक्षणीयोऽयं पक्षः ।

यदप्येतदुक्तम्, भेदस्य भेदान्तराभ्युपगमेऽपि नानवस्थादोषः, मूलभेदव्यवहारस्य भेदान्तरापरिज्ञानेऽपि विरोधाभावादिति । तच्च नैवम्, भेदस्य ज्ञायमानतया व्यवहारहेतुत्वात्, यत्र सत्तया हेतुत्वं बीजाङ्कुरादौ, तत्र नानवस्थादोषः, अत्र त्वाश्रयप्रतियोगिभ्यां भिन्नत्वेन ज्ञातो भेदो भेदव्यवहारहेतुः, अन्यथा तयोर्भेदस्य च भेदान्तरानवेक्षणे वस्तुदर्शनमात्रेण स्वरूपभेदव्यवहारप्रसङ्गः । भेदिनो भेदस्य भेदज्ञाने आश्रयधर्मयोर्भेदज्ञानस्यानवस्था भाविस्यात्, तस्मात् स्थैवमिन्यनवस्था दुर्निवारैव । यत्तु कैश्चिदुक्तम्— भेदस्य भेदान्तरापेक्षा नास्त्येव, परगतभिन्नव्यवहारहेतुत्वात्, यत् परगतकार्यकारि तत्तथाभूते कार्ये न परमपेक्षते, यथा रूपं रूपव्यवहारे परिमाणं वा मानव्यवहारे, अतो भेदस्य भेदान्तरापेक्षा नास्त्येवेति, तर्हि सिद्धो नः पक्षः । भिन्नव्यवहारः सर्वत्र भेदधर्मयोगिनः इति स्वपक्षं परित्यज्य भेदस्वरूपमेव स्वस्मिन् भिन्नव्यवहारहेतुरित्युक्तं भवताऽपि, तदेवास्माभिरपि साध्यम्, सर्वत्र स्वरूपं स्वस्मिन् व्यवहारहेतुरित्यास्थेयम्, लाघवात् ।

अथ रूपस्य व्यवच्छेदे रूपान्तरनिरपेक्षत्ववद्घटादयोऽपि स्वव्यवच्छेदं स्वयमेव कुर्वन्तीति रूपापलापप्रसङ्ग इति, नैवम्, यदि रूपव्यतिरेकेण रूपबुद्धिः स्यात्, तदा रूपापलापोऽपि भवेत्, न हि कदाचिद्रूपमन्तरेण रूपबुद्धिरस्ति, अत्र तु भेदमन्तरेणापि स्वरूपस्य कदाचित् ग्रहणमस्तीति भवतैवोक्तम्, अतो यो धर्मभेदवादिभिः आश्रयोऽङ्गीकृतः, प्रतियोगी वा, तस्मिन्नाश्रये तस्मात् भेदव्यवहारः प्रवर्तते इति किं प्रमाणशून्येन भेदधर्मेण ।

यत्तूक्तम्, स्वरूपभेदवादिभिरुक्तेन दूषणेन धर्मभेदवादो दूषितः, धर्मभेदवादिभिरुक्तेन दूषणेन स्वरूपभेदवादो दूषितः, अतो भेदस्य प्रमाणा

• हारियोजनं अन्यदेव ग्रहणम्, तथा परिधयः पृथग्‍ग्रहः, न तयोः संकरः। भा. ४।३।१४।३६, • हारियोजनं परिधिप्रहरणानन्तरं अग्निष्टोमे। ११।३।१५।४६, • हारियोजनम्। 'प्रहृत्य परिधीन् जुहोति हारियोजनम्' इति। ११।२।७।३९, • हारियोजनः ग्रहः अग्निष्टोमे तृतीयसवनान्ते। अत्र सत्याषाढः— प्रहृतेषु परिधिषु सदस्यैश्चाभिहुत्य हारियोजनेन चरन्ति। १।८।४६॥ 'उपयामगृहीतोऽसि हरिरसि हारियोजनः' इति द्रोणकलशेन हारियोजनं सर्वे आसन्नं गृह्णाति। ४७॥ तं बह्वीभिर्धानाभिः श्रीत्वा न सादयति। ४८॥ शीर्षन्नधि निधाय उन्नेतुः प्रत्यञ्चं 'इन्द्राय हरिवतेऽनुब्रूहि, इन्द्राय हरिवते प्रेष्य' इति संप्रेष्यति। ४९॥ 'हरिः स्थ हर्योर्धानाः' इति त्रिरभ्य (अभितः पुरतश्च पश्चात् पुनः पुनः पुरता) वषट्कृते जुहोति (वषट्कारोत्तरं तूष्णीमेव निगमनं इति ज्योत्स्ना, प्राणेव इति वैजयन्ती) अनुवषट्कृते हुत्वा हरति भक्षम्। ५०॥ तं सर्वे समन्तः प्रतिनिमन्त्र्य उपनिष्क्रम्य 'इष्टयजुषस्ते देव सोम' इति त्रिभिः पिञ्जूलिकाकारं धाना भक्षयन्ति। ५१॥ संदश्य अनभिमन्त्र्यन्तः धानाना निष्पाणि कुर्वन्तो निरवधयन्तः 'आपूर्याः स्थाऽऽमा पूरयत' इत्युत्तरवेद्या भानान् निधाय उपजुह्वन्ति, 'रय्यै त्वा पोषाय त्वा' इति वा। १।८।५२–५३॥ इति। • हारियोजनः सवनीयविकारे सोमयागान्ते न कार्यः। भाट्ट. ४।३।१२. • हारियोजनस्य परिधिप्रहरणोत्तरकालत्वमग्निविधानं नाङ्गता। भा. ४।३।१४।३६, • हारियोजने मात्रस्तुतोऽपि भक्षप्रतिपादनं ज्योतिष्टोमे। ३।५।९।३० पृ. १००६, • हारियोजने सर्वे एव प्रात्स्तुत्मह्निताः भक्षयितारः इति सिद्धम्। भा. ३।५।९।३०.

• हारियोजनादि बर्हिःप्रहरणान्तं कर्म द्वादशाहे आद्येषु नवस्वहःसु एकादशे च न कर्तव्य किंतु पत्नीसंयाजोत्तर विरामः कर्तव्यः। अवशिष्टं च कर्म द्वादशेऽहनि पत्नीसंयाजोत्तरं कर्तव्यम्। त्रि. ९।१।१९.

• हारियोजनोत्तरत्वं पत्नीसंयाजानाम्। भाट्ट. ९।१।१९.

• हारियोजनगतसर्वभक्षन्यायः ३।५।९।२७–३० मीको. पृ. १६४९ 'मात्रस्तुतोऽपि हारियोजने॰' इत्यत्र द्रष्टव्यः।

• हारियोजनन्यायः। हारियोजने मात्रस्तुतोऽपि सोमभक्षः। ३।५।९।२७–३०, मीको. पृ. १६४९ 'मात्रस्तुतोऽपि हारियोजने सोमभक्षः' इत्यत्र अधिकरणं द्रष्टव्यम्।

• हारियोजनपरिधिप्रहरणयोः कालार्थः संयोगः नाङ्गाङ्गिभावः। भा. ४।३।१४।३६,

• हारीतादिस्मृतिविशेषाः केचित् कविदेशविशेषे दृश्यन्ते। ततश्च व्यवस्थया प्रामाण्यमिति चेन्न, अनुमितवेदमूलकत्वेन सर्वसाधारणत्वात्। वि. १।३।८.

• हिंसा च प्रतिषिद्धा। भा. १।१।२।२ पृ. १९. • हिंसा प्राणवियोगः, प्राणवियोगानुकूलव्यापारो वा। मणि. पृ. ८, • 'हिंसा हि फलभेदेऽपि भिन्ना तेभ्यः स्वरूपतः। सा हि प्राणवियोगात्मा श्येनसाध्याद्विनत् पृथक्॥' पृ. ८. • हिंसायाः क्रत्वर्थायाः नानर्थत्वम्। वि. १।१।२.

• हि-शब्दः चार्थे (क्वचित्)। मञ्जु. पृ. १४१. • हि-शब्दः तत्र हेत्वर्थे (क्वचित्)। सु. पृ. २५७, • हि-शब्दः। निपातानामनेकार्थत्वात् (१) तस्मादर्थे हि-शब्दः। (२) हि-शब्दः प्रसिद्धार्थवाची। पृ. ४९०. • हि-शब्दात् अनुवादस्य प्रतीतिः। वि. ३।८।४.

✠ 'हितं मनोहारि च दुर्लभं वचः' इति न्यायः। इति भारविः, स्पष्टः। साहस्री. ९६१.

• हिरण्मय्यः शमीमय्यो वा स्रुचः दीक्षणीयाः वरुणप्रघासेषु विहन्ते। भा. ३।१।४।१२.

• हिरण्यं अनग्ना तेजः। भा. ८।१।१८।१५.

✠ हिरण्यमाज्यधर्म तेजस्त्वात्। ८।१।१८। ३५॥

'प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः' इत्यत्र कृष्णलगुञ्जापरिमितं हिरण्यं हविः श्रुतम्। तत् हिरण्यं आज्यधर्मं, आज्यस्य उपांशुयाज-

अनेकार्थविधिप्रसङ्गात् कर्मस्थहिरण्यग्रहणानुवादेन सुवर्णशोभनत्वविधिरसौ उच्यते पुरुषधर्म इति । कुतः ? ' हिरण्यग्रासस्योर्मिर्गो भवेत्साकदनर्थकः । कर्मणा सह संबन्धे प्रमाणं तु न विद्यते ॥ ' प्रकरणाम्नानस्य हि एतदेव प्रयोजनम्, कथं नाम तदङ्गत्वं विज्ञायेत इति । यदि अप्रकरणाधीतस्यापि कर्माङ्गत्वमेव स्यात् ततः प्रकरणाम्नानं अनर्थकं भवेत् । यतस्तु वेदेनैव प्रकरणाप्रकरणाम्नानविवेकः कृतः । ततोऽवगम्यते नूनं प्रकरणाधीतानां पुरुषधर्मत्वमिति ।

अद्रव्यदेवतत्वात् शेषः स्यात् । २१ ॥

भाष्यम्— तुशब्दः पक्षं व्यावर्तयति । न पुरुषधर्मो भवेत् । अग्निहोत्रादीनां शेषः स्यात् । कस्मात् ? अद्रव्यत्वात् । नात्र द्रव्यदेवतं श्रूयते । तच्छ्रवणात् भार्यं, यष्टव्य, इति परिकल्प्येत । भवति तु द्रव्यदेवतासम्बन्धे निर्मितिरयं धारणावचनः संस्कारवाची । संस्कारश्च शेषभूतस्यावकल्पते, नान्यथा । तस्मात् कर्मणां अग्निहोत्रादीनां शेषः । एवं ' सुवासःसा भवितव्यम् ' इति ।

वा— यद्यपि तावत् निर्दिष्टविधानं तथापि कर्मशेष एव स्यात् । अन्यथा हि फलं कल्प्येत । ननु क्रतुसंबन्धोऽपि कल्पयितव्य एव । सत्यम्, प्रमाणवती हि तत्कल्पना । कर्मणश्च सामान्येन प्रयोजनाकाङ्क्षाया कर्मैव उपतिष्ठते । तेन तत्संबन्धः प्रमाणवान्, न स्वर्गसंबन्धः । एवं च मन्यते, यथा यागदानहोमान् मुक्त्वा नान्यत् प्रधानकर्मत्वं प्रतिपद्यते । न चेह यागादित्वमस्ति, संप्रदानाद्यभावात् । अतः औत्सर्गिकेण अङ्गत्वेन कर्मशेषत्वम् । अथवा धारणमेतत् श्रूयते । तच्च उत्पत्त्यैव धार्यमाणशेषभूतम् । न च लौकिकस्य निष्प्रयोजनत्वात् संस्कारार्हत्वम् । अतः कर्माङ्गभूतयो. वासोहिरण्ययोर्विधिः । अथवा त एव अनेकार्थविधिदोषान् सति च संभवे सत्यद्गुणे विधिशक्तिसंचारणात् हिरण्यधारणं ' हिरण्यं हस्तेन भवति अथ गृह्णाति ' ' हिरण्यं हस्ते कृत्वा षोडशिना स्तुवते ' इत्येवमादिग्रहणविहित अनूद्य सुवर्णता विधीयते । ' वासः परिधत्ते ' इति च एतद्विहिते वाससि शोभनत्वम् । एवं च सूत्रकाराणां ' हिरण्यमिति जातरूपं प्रतीयात् ' इत्यादिपरिभाषणस्य एतदेव मूल्यम् । अन्यथा रजतजातरूपयोधारणे सति हिरण्यशब्दे अन्यतरावधारणमूलं अन्यत् कल्प्यं स्यात् ।

' अद्रव्यत्वात् ' इति च ( सूत्रे ) नात्र द्रव्यं विधीयते, किं तर्हि ? तद्विशेषणमात्रविधानमेतत् । अतश्च यत्र द्रव्यं तद्गतेन गन्तव्यमिति । ' यस्त्वत्र भाष्यकारेण देवताग्रहणं कृतम् । तदुत्सूत्रमयुक्तं च प्रधानं हि जपाद्यपि ॥ ' अयागानामपि प्राधान्यदर्शनात् न किंचित् देवताग्रहणेनेति ।

वेदसंयोगात् । २२ ॥

भाष्यम्— आध्वर्यवमिति वेदसंयोगः शेषभूतस्य युज्यते । शेषभूतो हि अध्वर्युणा क्रियते, न पुरुषधर्मः । दर्शपूर्णमासादीनां हि कर्मणां साङ्गानामध्वर्युः कर्ता । तस्मादपि कर्मधर्मा एवमादीयका इति ।

वा— कर्माङ्गत्वे च अस्याः क्रियाया. आध्वर्यवसमाख्या विनियोक्त्री भविष्यति । पुरुषधर्मत्वे बाध्येत । यदाऽपि हिरण्यानुवादेन सुवर्णता विधीयते, तदाऽपि तद्विधिसंबन्धित्वात् अक्रियात्मकत्वाच्च नैव समाख्या व्याप्रियते इति वैदिकत्वसामान्यं वेदसंयोगस्यार्थः । तेन यो नाम वदेत् लोकतोऽपि अस्त्येव वासोहिरण्यधारणप्राप्तिः, अतः तदनुवादेनापि शक्यं गुणविधानं इति, सोऽपि व्यावर्तितो भवति ।

द्रव्यपरत्वाच्च । २३ ॥

भाष्यम्— द्रव्यपरश्चात्र भवति निर्देशः, ' सुवर्णं धार्यम् ' इति द्वितीयार्थसंयोगात् । द्रव्यसंस्कारश्च कर्मशेषत्वे प्रयोजनवान्, अनर्थकः पुरुषधर्मे ।

वा— पूर्वं धारणस्य स्वाभाविकमेव शेषत्वम् इत्युपन्यस्तम् । इदानीं तदेव वचनहेतुरुच्यते कर्मत्वनिर्देशात् इति । तत्र हिरण्य इति असन्देहदर्शनात् ' द्वितीयार्थसंयोगात् ' इति च भाष्यात् नीहान् इतिवत् द्वितीयैव इति भ्रान्तिर्भविष्यति । कृत्प्रत्ययेन अभिहितत्वात् नात्र कर्मणि द्वितीया उपपन्ना, प्रथमैवेयम् । द्वितीयार्थस्तु धार्ये इति ण्यत्प्रत्ययेन उक्त इति द्रव्यपरत्वाभिधानम् । अत एव भाष्यकारेणापि ' द्वितीयार्थ

त्वेन नियता न क्रतुस्मृतिः । अतः पुमर्थता स्वर्गः कल्पोऽन्यद्वाऽस्तु यथेप्सितम् ॥' तस्मात् पुरुषार्थो धारणविधिः ।

भाट्ट— अनारभ्य 'सुवर्णं हिरण्यं भार्यम्, सुवर्णोऽस्य भ्रातृव्यो भवति' इति श्रुते न तावत् क्रतुगतहिरण्योद्देशेन सुवर्णत्वविधिः, धारणप्राप्त्यभावेन अनुवादानुपपत्तेः । नापि 'हिरण्यं हस्ते भवत्यथ षोडशिनः स्तोत्रमुपाकरोति' इति विहितक्रतुहिरण्यधारणानुवादेन सुवर्णत्वविधिः, विशिष्टोद्देशापत्तेः । अतः भार्यं इति कृत्यप्रत्ययेन सुवर्णस्य कर्मत्वाभिधानात् तदुद्देशेनैव धारणाख्यसंस्कारविधिः । हिरण्यपदस्य तु सुवर्णरजतसाधारणवाचिनोऽनुवादत्वम् । न च एवमपि क्रतुगतसुवर्णोपस्थितावेव प्रमाणाभावः, सुवर्णस्वरूपे आनर्थक्यात्, लौकिकक्रियासाधनीभूतग्रहणेऽपि च तत्सादवस्थ्यात् । सुवर्णस्यैव श्रुतकर्मत्वान्यथाऽनुपपत्त्या स्वर्गार्थवादिकफलकल्पनस्य च आश्रयाभावात् अनुपपत्तेः । पारिशेष्यादेव क्रतुगतसुवर्णोपस्थितिलाभोपपत्तिः । इति प्राप्ते, न तावत् प्रकरणात् क्रतुसम्बन्धोपपत्तिः, अनारभ्याधीतत्वात् । नापि जुह्वादिवत् अव्यभिचरितक्रत्वात्, लोकेऽपि सुवर्णस्यैव व्यभिचारात् । न वा पारिशेष्यात्, श्रुतकर्मत्वान्यथानुपपत्त्या सुवर्णस्य आर्थवादिकफलसाधनत्वकल्पनाया एव प्रसक्तेः पारिशेष्याभावात् । धारणस्य संस्कारकर्मत्वेऽपि आश्रयापेक्षायां सुवर्णस्य तत्त्वेनापि अर्थाद्न्वये बाधकाभावात् । न चैवमपि, तथात्वे धारणसुवर्णोपकरणयोः द्वयोर्भावनयोः अपूर्वयोस्तत्फलयोश्च कल्पने गौरवापत्तेः, सुवर्णेऽपि अपूर्वविधित्वप्रसङ्गाच्च । 'अध्वर्युं वृणीते' 'स्वाध्यायोऽध्येतव्यः' इत्यादौ तु उभयोरपि दृष्टार्थत्वात् उक्तगौरवाभावेन संस्कारविध्यन्यथानुपपत्त्या विनियोगकल्पनेऽपि न दोषः । प्रकृते तु धारणेन सुवर्णं संस्कुर्यात् तेन च तदाश्रितेन फलं भावयेत् इति कल्पने गौरवम् । अतः कृत्यप्रत्ययस्य कर्मैवात्र भाव्यता । तस्या च आवश्यकत्वात् आर्थवादिकफलस्यैव भाव्यत्वं न तु सुवर्णस्य, उद्देश्यानेकत्वप्रसङ्गात् । अतः सक्तुन्यायेन ( २।१।५ अधिकरणे ) विनियोगभङ्गात् सुवर्णहिरण्यविशिष्टधारणमेव अर्थकर्मतया विधीयते । किंच सुवर्णस्वरूपे आनर्थक्ये यथैव तत्कार्ये क्रतुः, एवं लौकिक्यपि क्रिया । तस्मादपि च नैवानर्थक्यम्, होमकर्मणि बलिहरणादिवत् निर्विघ्नपरिसमाप्त्यर्थत्वेन धारणस्योपकारकत्वोपपत्तेः । अतः पारिशेष्याभावात् न क्रत्वर्थत्वम् । न च उभयार्थत्वम्, एकस्यैव विधेः मते प्रयोजकत्वं अंशान्तरे च प्रधानप्रयुक्तत्वात् अप्रयोजकता इति वैरूप्यापत्तेः । अतः सक्तुवत् विनियोगभङ्गमङ्गीकृत्य धारणस्य अर्थकर्मत्वमेव युक्तम् । न च तथापि वैदिकनियमसामान्यात् क्रत्वङ्गत्वम्, सादृश्येन क्रतुपरिगतो धर्मातिदेशस्यैव अन्यत्रेऽपि बाधकाभावात् इति वाच्यम् । विधिबलेन व्यवस्थितेषु अनियमेन सर्वेषु इष्टेषु तद्वत्निरन्तरदेशावस्थायामपि सर्वपुरुषाभिलषितत्वेन शीघ्रोपस्थितिकतया स्वर्गस्यैव कल्पनीयत्वात्, आर्थवादिकफलस्य स्ववाक्योपात्तत्वेन ततोऽपि शीघ्रोपस्थितिकत्वाच्च । क्रत्वर्थत्वे तु स्वगतेन वैदिकक्रियात्वेन क्रतुगतस्य तस्योपस्थितौ क्लेशोपस्थिततदङ्गत्वकल्पने गौरवम् । अत एव विश्वजिन्न्यायादौ न तत्कल्पनम् । प्रकृते तु विशिष्टधारणस्य आर्थवादिकमेव फलं इति पुरुषार्थता । वस्तुतस्तु– सुवर्णस्य कर्मत्वमेव, तस्यैव तु आर्थवादिकं फलम् । 'तेन' इति पदाध्याहारस्य कृतिपक्षेऽपि समानत्वात् । न च अत्र आश्रयापेक्षा, विधिरेष्यर्थस्य संस्कारविधिनैव परिहारात् । 'सुवर्णोऽस्य भ्रातृव्यो भवति' इत्यत्र भविष्यदर्थकत्वमात्रकल्पना तु प्राचीनमतेऽपि अविशिष्टा । स्तुतिरूपता, सुवर्णपदे अपूर्वसाधनत्वलक्षणा च वाधिका, इति नवैव लाघवमिति । ३।४।१२.

मण्डन— 'पुंसो हिरण्यस्य धृतिः क्रतोर्न ।' ८,
शंकर— 'स्वर्णधारणमेव च ।' (न क्रत्वङ्गम्) ।

● हिरण्यधारणन्याय. (३।४।८) । भाष्यकारादिभिः प्रजापतिव्रतवाक्ये पर्युदासत्वमङ्गीकृत्य पुरुषार्थत्वं सिद्धान्तितं तदपि कलञ्जभक्षणनिषेध–हिरण्यधारणन्यायेन क्रत्वर्थत्वाद्यनुपपत्तेः उपेक्षितम् । भाट्ट. ४।१।३.

आह, ननु एतदुक्तम्, तस्याभावादवयवस्य पक्षपरिप्लवते इति । अत्रोच्यते । नाभावः । प्रत्यक्षा तस्यैकबुद्धिः । सा चान्येषु इष्टकासु नावकल्पते । न च अनयव संघिटयते पुरीषच्छन्नानाम् । तस्मात् पञ्चामसयोगेऽपि एकबुद्धेरुत्पादात् इष्टकाभिष्टकाभ्यो व्यतिरिक्तं द्रव्यं अस्ति निधानार्थमस्ति । यदि वा इष्टकासमूहोऽपि एकबुद्धेरेवावगम्यते । यत्तु एकाकर्षणे न कृत्स्नाकर्षणमिति, सत्यम्, संस्यूतौ तत्र विच्छेदः क्रियते । द्विविधानि हि द्रव्याणि स्थावराणि जङ्गमानि च । तत्र स्थावरेषु विच्छेदो भवति यथा वनस्पतौ पर्णे गृहीत्वा कृष्यमाणे न कृत्स्नः कृष्यते स्थावरत्वात्, एवमिदमपि । स्थावरं हीदं अग्निद्रव्यम् । तस्मात् सकृदेव प्रोक्षणं विकर्षणं च कर्तव्यमिति ।

टुप्— 'इष्टकाभिरग्निं चिनुते' इति शब्दतस्तावत् इष्टकाना (तृतीयान्ताना) पारार्थ्येनावगतत्वात् तदर्थं प्रोक्षणं न भवति, द्वितीयासंयोगात् अग्न्यर्थं प्रोक्षणम् । (अग्निशब्दश्च अग्न्यर्थवचनोऽपि प्रोक्षणादिवाक्येषु तदाधारभूते स्थले लक्षणया वर्तत इति वेदितव्यम् ।) ननु अग्निशब्देन समुदायोऽभिधीयते इत्युक्तम् । उच्यते । प्रत्यक्षेण इष्टकाव्यतिरिक्तः अवयवी उपलभ्यते । न च कालान्तरे पुरुषान्तरे अवस्थान्तरे वा अविपर्यासात् भ्रान्त इति शक्यते कल्पयितुम् । अपि चात्मीयानवयवानपेक्ष्य इष्टकाऽपि अवयविनी भवत्येव । अथोच्येत, इष्टका अपनीय स निदर्श्यतां यदि व्यतिरिक्तोऽस्ति, तस्मादिष्टका एव परमार्थतः सन्तीति । (परिहरति— ) एवं वर्ण्यमाने भवता आत्मीयावयवव्यतिरिक्ता इष्टका निदर्शयितव्या, न च शक्यते (भवताऽपि निदर्शयितुम्) । अपि च इष्टकानामवयवान्तराणि, तेषामपि (अवयवान्तराणि) अन्ये, तेन परमाणुषु प्रोक्षणमवतिष्ठेत । न च शक्याः (ते) प्रोक्षितुम् । तस्मात् पूर्वपक्षिणः प्रोक्षणमेवानर्थकम् । अथ अवयवव्यतिरिक्ता इष्टका अस्ति, ततः अग्निरपि इष्यताम् । यदुक्तं एकेष्टकाकर्षणेऽपि न कृत्स्नः कृष्यते इति । तदुच्यते । यत्र यत्र द्रव्यान्तरबुद्धिः तत्र तत्र द्रव्यान्तरम् । न यत्र एकस्मिन्नवयवे कृष्यमाणे कृत्स्नः (अवयवी) कृष्यते । (बुद्धिरेवात्र प्रमाणम्, नापकर्षणमित्यर्थः) । यत्र कृत्स्नः कृष्यते तत्रापि तथा दृष्टम् । यत्र तु एकस्मिन् कृष्यमाणे (स एव) एकः कृष्यते तत्रापि तथा दृष्टम् (न चैतावता अवयव्यपलापः शक्यते कर्तुम्) । न च एकस्मिन् कृष्यमाणे यस्मात् कृत्स्नः कृष्यते तस्मात् द्रव्यान्तरम् । न च द्वितीये कृष्यमाणे द्रव्यान्तरं द्रव्यान्तरस्य कारणम् । (किंतु–) यत्र द्रव्यान्तरबुद्धिर्न विपर्येति (तत्र अवयवैः अवयवी आरभ्यते इति) ।

चोदनासमुदायात्तु पौर्णमास्यां तथात्वं स्यात् ॥ २८ ॥

भाष्यम्— अथ यदुक्तं 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति, नात्र आग्नेयादिभ्यः किंचिदर्थान्तरम्, तथा इहापीति । उच्यते । युक्तं पौर्णमास्यां तथाभावः । चोदनासमुदायो हि तत्र कर्म । न च कर्मणोऽन्यत् विद्यते । इह तु द्रव्यान्तरमस्तीत्युक्तम् । तस्मात् वैषम्यं पौर्णमास्या इति ।

शा— अग्नौ श्रूयते 'हिरण्यशकलैरग्निं प्रोक्षति' इति । किं प्रोक्षणं सकृदेव स्यात् उत प्रतीष्टकं भेदेनेति । यदि इष्टकाव्यतिरिक्तः अवयवी अग्निशब्दाभिधेयः, ततः सकृत् । अथ इष्टका एव संहता अग्निधारणार्थेन स्थापिताः अग्निशब्देनाभिधीयन्ते, ततस्तदर्थं प्रोक्षणं प्रतीष्टकं कर्तव्यम् (यद्यपि वनादिवत् इष्टकासंघ एव अग्निशब्दवाच्य इति पूर्वपक्षेऽपि वक्तुमुक्तम्, न तु संहता इष्टका इति, तथापि संघस्य अमूर्तस्य प्रोक्षणानर्हत्वात् संहतानामिष्टकानां अग्निशब्दवाच्यत्वमुक्तम्) । यत्र एकावयवाकर्षणे अवयवान्तराकृष्यते संधिश्च न दृश्यते तत्रैव देवदत्त-घटादौ अवयवी अभ्युपगम्यते । न चेह एकेष्टकाकर्षणे अन्यासामाकर्षणम्, संधिश्चात्र पुरीषच्छन्नानामपि इष्टकानामनुमानेन दृश्यते । तस्मात् नास्त्यवयवी 'पञ्चामसयोगे च न द्रव्यान्तरम्' इति काश्यपीया. । तस्मादिष्टकार्थं प्रोक्षणं प्रत्येकं स्यात् ।

साकर्यम् । न चेदं उत्तरवेदिधर्माणा अग्नौ अतिदेश-कथन संकर्षे विरुध्येत इति वाच्यम् । देशवत् अग्नौ बहुतरवैशेषिकधर्माम्नानेऽपि अपेक्षितहविर्धानपूर्वदेशवर्तित्वादिकनियमधर्माणां स्थानापत्त्यतिदेशेन उत्तरवेदितः प्राप्तेरविरोधात् । उत्तरवेद्या तु यावदपेक्षितधर्मसाकल्यात् न वैपरीत्याशङ्का । अतश्च प्रकृतौ वत्सप्रोक्षणादिधर्माणां अभ्युत्तरवेदिमात्रार्थत्वेऽपि यत्र विकृतौ तदुभयकार्यापन्नं उक्तपरिमाणं स्वतःसिद्धभूमिकं तद्बहिःस्थावभूमिकं स्थण्डिलं अग्न्याधारत्वेन समाम्नातं तत्र प्रोक्षणादीनामूहसिद्धिः । संस्थानविशेषोपधायकक्रियासाधनीभूततद्वस्तुमात्रार्थत्वपूर्वपक्षे तु उक्तविकृतौ तदभावात् न प्रोक्षणादि इति ऊहविचारोपयोगित्वं चास्याधिकरणस्य । यदि चैवंविधा विकृतिः न समाम्नाता तदा कृत्वाचिन्तया उदाहरणान्तरे वा ऊहोपयोगः अनुसंधेयः । प्रासङ्गिकं वा इदमधिकरणम् ।

मण्डन— ' द्रव्यैकभावात् तद्धर्मधर्माः । '

शंकर— ' नाग्निधर्मः प्रतीएकम् । ' ५।१।१४.

● हिरण्यशकलाधिकरणम् । ९।१।८।२६–२८ ॥ न चैवं तण्डुलप्रापारकत्वादगत्वस्य धारणानन्तरं उदनीभूतव्रीहिप्रयत्नपात्रस्य प्रतिनीहि भिन्नत्वात् हिरण्यशकलाधिकरणपूर्वपक्षन्यायेन प्रतिनीहि प्रोक्षणापत्तिरिति वाच्यम् । न्यायप्रकाशकारास्तु ' अग्नये वो जुष्टं प्रोक्षामि ' इतिमन्त्रे बहुवचनश्रवणेन एकप्रोक्षणम् दीते । अत एव तद्वाक्यस्त्रीहिपदे कारणतानुरूपता । जै. ३।१।४।१० पृ. १५२.

● हिरण्यशकलसहस्रेण अग्निचयने अग्नेः प्रोक्षणम्, तत्र प्रत्येकेन न प्रतीएकम् । वि. ९।१।१८.

सू हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् । १०।३।२।१३ ॥

वायव्ये पशौ ' हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति ' इति श्रूयते । तत्र हिरण्यगर्भ० हिरण्यगर्भमन्त्रस्य गुणविधिः पूर्वस्य प्रथमस्य आघारस्य गुणविधि. इत्यर्थः । मन्त्रलिङ्गात् । प्रजापतिवचनोऽयं मन्त्रः । हिरण्यगर्भो हि प्रजापतिः । प्राजापत्यश्च पूर्वं आघारः । उत्तरस्तु ऐन्द्रः । तस्मात् मन्त्रलिङ्गात् पूर्वस्याघारस्य गुणः हिरण्यगर्भमन्त्रः इति पूर्वः पक्षः ।

प्रकृत्यनुपरोधाच्च । १४ ॥

प्रकृत्यनुपरोधात् प्रकृतेः प्रकृतिवत् इति चोदकस्य अनुपरोधात् विरोधाभावाच्च ' हिरण्यगर्भः समवर्तताग्रे ' इति मन्त्रः वायव्ये पशौ पूर्वस्याघारस्याङ्गं इति पूर्वपक्षसिद्धिः । इतरथा उत्तराघारस्य मन्त्रः अपनीयेत न चापनीतः ।

उत्तरस्य वा मन्त्रार्थित्वात् । १५ ॥

वायव्ये पशौ ' हिरण्यगर्भः समवर्तताग्रे ' इति मन्त्रः आघारे उक्तः । तत्र पूर्वस्य आघारस्य गुणोऽयं मन्त्रः इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । न पूर्वस्याघारस्य गुणः किंतु उत्तरस्याघारस्य गुणोऽयं मन्त्रः स्यात् । मन्त्रार्थित्वात् । पूर्वस्याघारस्य प्रकृतावपि नास्त्येव मन्त्रः । इति वायव्ये पशावपि पूर्वः आघारो न मन्त्रमपेक्षते । उत्तरस्य तु अस्ति मन्त्राकाङ्क्षा । तत्र प्राकृतं मन्त्रं बाधित्वा अयं वैकृतो मन्त्रो विहितः । तस्मात् हिरण्यगर्भमन्त्रः उत्तरस्याघारस्य गुणो न पूर्वस्येति सिद्धान्तः ।

विप्रतिदेशात् तच्छ्रुतौ विकारः स्यात् गुणानामुपदेश्यत्वात् । १६ ॥

वायव्ये पशौ ' हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति ' इति श्रुतम् । तत्र तच्छ्रुतौ आघारश्रुतौ विप्रतिदेशात् गुणविधेरुपदेशात् मन्त्रः उत्तराघारमन्त्रस्य विकारः बाधकः स्यात् । गुणानां उपदेश्यत्वात् । उपदेशो हि मन्त्रविशेषः अत्र उत्तराघारे । तस्मादुत्तरस्य आघारस्य गुणविधिरयम् । इति सिद्धान्तः ।

पूर्वस्मिंश्चामन्त्रत्वदर्शनात् । १७ ॥

वायव्ये पशौ ' हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति ' इति विहितो मन्त्रः उत्तरस्याघारस्य गुणः इति सिद्धान्ते हेत्वन्तरमाह । पूर्वस्मिन् आघारे अमन्त्रत्वस्य दर्शनात् ' न ह्यत्रैति करोति, मन्त्रं च आह ' इति स्पष्टमेव अमन्त्रत्वं दर्शितम् । तस्मात् हिरण्य-

तद् कल्पनीयम्, उत्तराघारे तु तद् क्लृप्तम्, तस्य प्रकृतावपि समन्त्रकत्वात् । अतः क्लृप्ते नियमादृष्टे मन्त्रविशेषमात्रविधानं लघु, इत्युत्तराघारे एव मन्त्रविधिर्युक्तः ' इति । उक्तं च टुप्टीकायां ' मन्त्रनियमादृष्टमदृष्टं कल्पनीयं पूर्वाघारे, तत्तु क्लृप्तमुत्तराघारे, तस्मिन् सति कल्पयितुं न शक्यते ' इति । रसायनम्. पृ १०३. ● कण्वरथंतरस्य बृहद्रथंतरस्थानापन्नत्वेन तद्गतस्तोभाभिनिधनादिसंस्कारजन्यादृष्टार्थत्वेनैव हिरण्यगर्भमन्त्रन्यायेन ( १०।३।२ ) कल्पनात् तद्धर्मप्राप्त्युपपत्तिः । भाट्ट. ९।२।१८ पूर्वपक्षमघट्टे सिद्धान्ती, ● कण्वरथंतरे च हिरण्यगर्भमन्त्रन्यायेन तत्तत्संस्कारसमूहद्वयजनकस्यैव ऋगन्तरजन्यतत्तदृष्टाकाङ्क्षुणाविधानशक्तिविधानात् तत्तत्संस्कारसमूहप्रयुक्तधर्मप्राप्त्युपपत्तिः । ९।२।१४ सिद्धान्तः, ● सामद्वयजन्यनियमादृष्टभेदात् तन्नियमादृष्टसाधनत्वस्यैव च तद्धर्मविधौ उद्देश्यतावच्छेदकत्वात् कण्वरथंतरे च हिरण्यगर्भमन्त्रन्यायेन तद्भेदाभावात् उभयसाध्यविशेषधर्माकर्षणापत्तिः । ९।२।१४ पूर्वपक्षघट्टे सिद्धान्ती

● हीनस्तोमकेषु यावदर्थं प्रकृत नाम निवर्तनीयम् । भा. १०।४।१०।२०.

● ' हीष् ' इति निधनं सौभरे काम्यं वृष्टिकामस्य विहितम् । वि. २।२।१३. ● हीष्, ऊर्क्, ऊ इति निधनविशेषाणां सौभरे साम्नि एव फलभेदेन व्यवस्था न तु तेभ्यः सौभरात् पृथक् फलम् । सौभराधिकरणम् । २।२।१३।२८–२९.

● हीषादिन्यायः ( २।२।१३ ) । हीषादिन्यायेन सर्वकामवाक्यमात्र–पशुप्रयोजकप्रणयनजनकचमसद्वयेनैव प्रकरणानुरोधेन पशूद्देशेन गोदोहनं विधीयते न तु साक्षात् । भाट्ट. ४।१।२ वर्णक ३ ( पूर्वपक्षे ).

● हुतहविर्दाहः शिष्टाचारकल्पविधिप्रशः — पूर्वोपयोगद्वारकसंस्कारार्थे अदृष्टार्थे प्रतिपत्तिरूपकारकं कर्तव्यं प्रकृतिभूतं वैदिकं कर्म । धात्व. पृ ८३.

● ' हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः ' अत्र अवदानेन हृदयादिमात्रहविष्ट्वसिद्ध्यर्थं विधौ यते । ततश्च क्रमबोधिका श्रुतिरपि अनुवाद एव, न तु क्रमे प्रमाणम् । भाट्ट. ५।१।१. ● ' हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः ' अत्र क्रमः पाठकम, न श्रौतः । अथशब्दः श्रुतिरपीयं सापेक्षत्वाद्दुर्बला । टुप्. ५।१।१।१ पृ. १२८९, ● ' हृदयस्याग्रेऽवद्यति ' इत्येवमादीनि न यागं चोदयन्ति इति द्वितीयेऽध्याये स्थितम् ( २।२।६।१७ ) । १०।७।१।१.

● हृदयादीनामेव अवदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन, तदितरावयवानां हविष्ट्वपरिसंख्या । १०।७।२।३–९. ● हृदयादीनां निष्क्रयार्थं पशौ. निगमनकर्म न आवश्यकः । भा. १२।४।६।१३.

● हृदयाद्यङ्गानामेव हविष्ट्वं अग्नीषोमीये पशौ । भा. १०।७।१।१–२. ● हृदयाद्यङ्गेष्वपि यथावत् पञ्चावत्तत्वमेव ज्योतिष्टोमेऽग्नीषोमीये पशौ । १०।७। २०।७२–७३. मीको. पृ. १७० ' अग्नीषोमीये पशौ यथायागित्र० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● हृदयाद्यवदानमेव पश्वालम्भस्य प्रयोजनम्, शकृत्प्रवेध लोहितनिरसनं च शेषप्रतिपत्तिः । वि. ४।१।१२. ● हृदयाद्यवदानानि सांनाय्यावदानप्रकृतिकानि । शा. २।२।६.

हृदयादिन्यायः । अग्नीषोमीये पशौ अवदानेषु एकादशानां हृदयादीनां परिसंख्या । पशौ हृदयादीनामेव अवदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वस्य परिसंख्या ॥

हविर्भेदात् कर्मणोऽभ्यासस्तस्मात् तेभ्योऽवदानं स्यात् । १०।७।२।३॥

भाष्यम्— प्रकृतं हविर्भेदः प्रयोगे समधिगतम् । इदमिदानीं संदिह्यते, किं येन केनचिदङ्गेन हविषा यागो निर्वर्तयितव्य उत सर्वेभ्योऽवदातव्यम्, अथवा परिसंख्या केनचिदिति । किं प्राप्तम् । सर्वेभ्योऽवदातव्यमिति, अवदानधर्मं अश्नुवन्ति यानि श्रुत । हविर्भेदात् । त्रीणि हवींषि हृदयादीनि यावदवदाने गृह्यन्ते, अवशिष्टानि च यथाकृत्स्नं प्रत्यक्षा परिशिष्टानि तेभ्य. सर्वेभ्योऽवदातव्यम् ।

पशवाङ्गत्या हि न केचित् विशेषा परिच्छिद्यन्ते । यदि एकस्मादङ्गादवद्येत, न पश्वाङ्गतिपरिच्छिन्ना सर्वे विशेषा उपलभ्येरन् । तत्र पश्वाङ्गत्या अङ्गभावो न कृत स्यात् । अनेकविशेषणविशिष्टं हि मांसादि परिच्छिन्दती अङ्गभावं नीता भवति, नान्यथा । एकस्मिन्नङ्गे हि पश्वङ्गनिपरिच्छिन्नाङ्गादेः सर्वावदानानामेकेनैव यथाश्रुतादेवावत्त भवति । पृथक् प्रकल्पितेषु अङ्गेषु एकस्मादङ्गादवद्यन् काश्चिद्विशेषान् जह्यात् । अभ्यस्यस्तु अवदानानि सर्वान् विशेषान् परिगृह्णाति । तस्मात् सर्वेभ्योऽवदातव्यमिति । आह । ननु पश्वाङ्गनिपरिच्छिन्नानां विशेषाणां यागार्थत्वात् अन्यतमेन यागः सिध्येत् । उच्यते । सिध्येदेवम्, यदि विशेषाणां यागार्थत्वं श्रूयेत । पश्वाङ्गत्वेन तु श्रूयते । तस्मात् विशेषेषु गृह्यमाणेषु अङ्गभावः कृतो भवति इति तदर्थं प्रयोगवचनेन विशेषा गृह्यन्ते, नावगम्यते विशेष, को वा विशेषो गृहीत, को वा नेति । अत सर्वे गृह्यन्ते प्रयोगवचनानुग्रहाय । यश्च विशेषो न गृहीत, तेन विनाऽपि यथाश्रुतमेव भवति इति कल्प्यमाने, तस्य पश्वङ्गत्या परिच्छेदे न कश्चिदपि अधिकोऽपेक्षोऽङ्गीकृतो भवति इति अनादरः । प्रति आश्रित स्यात् । तस्मात् सर्वेभ्योऽवदेय हृदयादिभ्यः अवखिद्धार्थेति ।

आज्यभागवद्वा निर्देशात् परिसंख्या स्यात् । ४ ॥

भाष्यम्— हृदयादिभ्योऽवदातव्यम्, नावशिष्टात् । कुतः ? तेषां निर्देशात् । निर्दिश्यन्ते हृदयादीनि ' एकादश वै पशोरवदानानि ' इति । तत्र प्राप्तत्वादेव एतावत् सिद्धं सम्भवति । आनर्थक्यान्नानुवादः । निर्गुणं च पुनःश्रवणं इतरेषामश्रुतानां परिसंख्यायकं भवति । यथा 'न गन्तव्यम्, न भोक्तव्यम्' इति न विस्पष्टः प्रतिषेधः, एवमेव परिसंख्यया प्रतिषेधः क्रियते । आज्यभागवत् । यथा गङ्गमेधीये पञ्चमे पदे आज्यभागग्रहणं परिसंख्यार्थमित्युक्तम् ( १०।७। ९।२८ ) । एवमिहापि द्रष्टेति । तस्मात् परिसंख्येति ।

तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत् पशोः पञ्चावदानत्वात् । ५ ॥

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति परिसंख्येति । तत्र हि त्रयो दोषाः – स्वार्थहानम्, परार्थकल्पना, प्राप्तबाधश्चेति । यदुक्तं निर्देशात् इति, नैतदेवम् । तेषां हृदयादीनां द्व्यवदानत्वं विवक्षन् अभिनिर्दिशेत् । नैव वचनव्यक्तिर्भवति ' एकादशैव पशोरवदानानि, नाभ्यधिकानि, यान्यवदानानि तानि द्विर्द्विरवद्यति ' इति । कथं तर्हि ? ' एकादश द्विर्द्विरवद्यति ' इति । कुतः ? नानावदानमनूद्यते, अप्राप्तत्वात् । कथमप्राप्ति ? पशोः पञ्चावदानत्वात् । पञ्चावदानत्वं हि पशोः श्रूयते । तस्मान्नानुवादः । एतानि द्विर्द्विरवद्यति इति एतेषां द्विरवदानं विधाय कृतार्थः शब्दो भवति । अवशिष्टानां त्यागं न वारयति । तस्मात् सर्वेभ्योऽवदेयमिति ।

अंसशिरोऽनूकसक्थ्यप्रतिषेधश्च तदन्यपरिसंख्यानेऽनर्थकः स्यात् प्रदानत्वात् तेषां निरवदानप्रतिषेधः स्यात् । ६ ॥

भाष्यम्— इतश्च न परिसंख्या । कुतः ? अंसशिरोऽनूकसक्थ्यप्रतिषेधात् । एवमेतेषां प्रतिषेध उपपद्यते, यदि न परिसंख्यानं भवति । भवति च सः । ' नांसयोरवद्यति, न शिरसः, नानूकस्य, नापरसक्थ्योः ' इति । परिसंख्याने अंसशिरोऽनूकसक्थ्ना प्रतिषेधः अनर्थकः स्यात् । अथ तु न परिसंख्या, ततः प्रदानं स्यात्, यान्यंसादीनि तेषां निरवदानं प्रतिषिध्यते । किं निरवदानमिति ? निष्कृष्य तस्मादङ्गात् अवदानं निरवदानं ' द्विरवद्यति ' इति तत् प्रतिषिध्यत इति । अत सर्वैरेवाङ्गैरिज्या क्रियते इति ।

अपि वा परिसंख्या स्यादनवदानीयशब्दत्वात् । ७ ॥

भाष्यम्— अपि वेति पक्षव्यावृत्तिः । परिसंख्यैव स्यात् । नैव सर्वेभ्योऽवदानव्यम् । कुतः ? पुनःश्रवणस्यार्थवत्त्वात् । ननु विशेषा परिसंख्येयुक्तम् । उच्यते । नायं दोषो भवति । कथम् ? अवदानं हि चोदकेन

होमार्थं प्राप्नोति । इह तस्य हृदयादिभिः सम्बन्धः क्रियते । तेन हृदयादीनि यागस्थेन होमसंबद्धानि भवन्ति, नान्यान्यङ्गानि पश्वङ्गैर्देवतासंबन्धीनि । न च एतस्मिन् प्रयत्ने हृदयादिविषये सति पश्वाङ्गैर्देवतासंबन्धोऽन्येषामङ्गानां होमसाधनत्वेनोपपद्यते । हृदयादिष्वपि पश्वाङ्गेषु ह्रियमाणेषु साङ्गैर्देवतासंबन्ध उपपद्यत एव । तस्मात् अन्यान्यङ्गानि परिसंख्यायन्ते । अपि च अनवदानीयशब्दो भवति 'यान्यन्यान् अनवदानीयान् गुदप्रहांश्च आग्नीध्रेभ्यो हरति' इति । यदि परिसंख्या तत किंचिदङ्गमनवदानीयं भवति । इतरथा सर्वमवदानीयं स्यात् । अनवदानीयशब्दो नोपपद्यते । तस्मात् परिसंख्येति । ननु शूलगुदाभिप्रायमनवदानीयं भविष्यति । नेत्युच्यते अनवदानीयं हि तत् । अनवदानीयहरणे आग्नीध्रेभ्यः इति चतुर्थी नोपपद्यते । नहि शूलगुदेन आग्नीध्रोऽभिप्रेयन्ते । स्यादेतत् परिक्रयार्थं तत् भविष्यतीति । उक्तमेतत्, न देवताद्वयेन स्वकार्याणि कर्तुं यान्तीति । तस्मात् न शूलगुदाभिप्रायम् ।

अब्राह्मणे च दर्शनात् । ८ ॥

भाष्यम्— इतश्च परिसंख्येति । कुतः ? अब्राह्मणे हि गर्भं दर्शयति । कथम् ? 'ककुभो राजपुत्र, प्राश्नाति भुजगोष.' इति ककुभो भक्षं दर्शयति । इतरथा यागे प्रवृत्तस्य अदर्शनं स्यात्, सर्वप्रदानं च भवेत् । निरवदानप्रतिषेधात् । तस्मादपि परिसंख्येति ।

शृताशृतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम् । ९ ॥

भाष्यम् — इतश्च परिसंख्येति । कुतः ? शृताशृतोपदेशात् । शृताशृतोपदेशो हि भवति 'अथान्यान्यभिमृशति शृतान्यशृतानि च' इति । यदि न परिसंख्या, सर्वेषां श्रपणं स्यात्, अशृतदर्शनं नोपपद्येत । परिसंख्याने सति हृदयादिभ्योऽन्येषां अयज्ञशेषत्वम् । यथा 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति । तेषां तत्र श्रपणं न स्यात् । अशृतदर्शनं चोपपद्यते । तस्मादपि परिसंख्येति ।

शा— 'एकेनापि पशोर्यागसाधनत्वोपपत्तितः । तन्मात्रेणैव यागः स्यात् सर्वेषां युगपन्मतेः ॥' नैतदेवम् । 'अच्छिद्रोपाद्धि सर्वेषां हविष्ट्वमवगम्यते । अवदानवचोभ्यस्तु विशेषोऽवधार्यते ॥'

सोम— पूर्वाधिकरणोक्तस्यावदानस्य विशेषपर्यवसाननिरूपणात् संगतिः ।

वि— 'एकेनाङ्गेन सर्वैर्वा यद्वैकादशभिर्यजि. ।, एकेन यागसिद्धेः, हविषां भेदनोऽन्तिके ॥ , एकादशभिरन्येषां परिसंख्या भवेदतः । न विरोधी गम्यमानादश्रुतोक्तिश्च शोभिता ॥' तस्मात् एकादशभिरेव यागः ।

भाट्ट— प्रदेयभूतावयवश्च नैक एव पशोः कश्चित् । विशसनादितादर्थ्यग्राहकसहकृतपशुसाधनत्वान्यथानुपपत्त्या हि कल्प्यमानं स्वाश्रयसाधनत्वं अवयविनः सर्वावयवेषु व्यासज्यवृत्त्या सर्वावयवद्वारैव कल्पयितुमुचितम् । अतो विनिगमनाविरहात् सर्वेषामेव साधनत्वावगमात् प्रदेयत्वम् । 'हृदयस्याग्रेऽवद्यति' इत्यादिवचनानि तु क्रमविधानार्थानि । प्रदेयत्वेनैव एतेषु अवदानप्राप्तेः एतेषां क्रमपरत्वात् । अत एव एकादशानामयं क्रमः, अन्येषां तु अनियमः । अथवा 'हृदयस्याग्रेऽवद्यति' इत्यनुवृत्त्या 'एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यति' इति श्रवणात् एकादशसु द्विरवदानं अन्येषु तु पञ्चावदानसंपादकतया त्रिरवदाननियमपरत्वेन सार्थकानि । न तु इतरपरिसंख्यार्थानि । अत एव 'नाग्नेरवद्यति न शिरसो नानूकस्य नापरसक्थ्योः' इति पर्युदासोऽपि सङ्गच्छते । इति प्राप्ते, यथैव विशसनादिसंस्कारानुरोधात् पशोरवयवप्रकृतित्व कल्पितोऽन्यथानाम्नैव साक्षात् हविष्ट्वमवगम्यते, तथैव 'हृदयस्याग्रेऽवद्यति' इत्यादिवाक्येषु हृदयादीनामेवावदानानामेव प्राकृतहविःसंस्कारकावदानप्रभवात् तेषामेव हविष्ट्वप्रतीतेस्तत्प्रकृतित्वमेव पशोरिति न सर्वेषामवयवानां साधनता । अत एव हृदयादिवाक्यानि तेषामवदानान्यथासंस्कारविधिद्वारा हविष्ट्वबोधकानि सन्ति इत-

प्राप्तिफलत्वोपपादनार्थत्वेन अर्थवत्त्वोपपत्त्योः साध्याकाङ्क्षापूरणात् सूत्रस्य अन्यूनत्वम् । इति सुधा. पृ. ८८ ।

विधिः स्यात् इति साध्ये अर्थवत्त्वोपपत्तिभ्याम् इति साधनस्य नान्वयो भवति इति, विधिः स्यात् इत्यत्र अपूर्वत्वात् इति हेतुः । अर्थवत्त्वोपपत्तिभ्यां इति हेतोश्च दर्वीपिठरादेः प्राप्तिः इति साध्यं द्रष्टव्यम् । इति सुधार्थः ।

स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य । २७ ॥

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' इति शूर्पं विधाय तस्य हेतुत्वेन 'तेन ह्यन्नं क्रियते' इत्युक्तम् । तेन शूर्पेण सह दर्वीपिठरादेरपि प्राप्तिः इति पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह ।

'शूर्पेण जुहोति' इति विधिः । 'तेन ह्यन्नं क्रियते' इति तस्य स्तुतिः न तु हेतुवादः । शब्दपूर्वत्वात् अन्नकरणत्वे होमसाधनता प्रति हेतुत्वस्य वेदैकसमधिगम्यत्वात् । वेदश्च शूर्पस्य होमसाधनत्वे शूर्पगतं अन्नकरणत्वं हेतुः इत्याह, न तु दर्व्यादिगतमपि । अतः तस्य च दर्व्यादिकस्य अपि अचोदना यत् अन्नकरणं तेनतेन होतव्य इति विधेः अभावः । इति कुतूहलम् ।

अन्नकरणतया हेतुत्वस्य प्रमाणान्तरानवसेयत्वेन शब्दैकसमधिगम्यत्वात् शब्देन च शूर्पेण होमकर्तव्यत्वे अन्नकरणत्वस्य हेतुत्वाभिधानात् तस्य च 'शूर्पेण जुहोति' इतिविधिसिद्धत्वेन हेत्वनपेक्षतया स्तुतिमात्रार्थत्वापत्तेः शूर्पस्यैव शब्दविहितत्वात् तदवरुद्धे होमे दर्व्यादेः अचोदना इत्येवं सूत्रं भाष्यकृता व्याख्यातम् । इति सुधा. पृ. ८८ ।

एतदेव सूत्रं अन्नकरणस्य होमसाधनतया स्तुत्येन शब्देन चोद्यमानतया इष्टत्वात् दर्व्यादेरकरणत्वात् अचोदना इत्यर्थपरम् । सुधा. पृ. ८९ ।



व्यर्थे स्तुतिरन्याय्येति चेत् । २८ ॥

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' इति शूर्पं विधाय 'तेन ह्यन्नं क्रियते' इत्युक्तम् । इदं वाक्यं शूर्पस्तुतिपरं इति सिद्धान्तिना उक्ते पूर्वपक्षी शङ्कते । ननु प्रकृष्टान्नसाधनत्वं यथा स्थाल्यादौ तथा न शूर्पे इति व्यर्थे प्रकृष्टान्नसाधनत्वरूपेण अर्थेन धर्मेण रहिते शूर्पे विषये स्तुतिः अन्याय्या इति चेत् पूर्वपक्षी ब्रूयात् ।

अर्थस्याभावो व्यर्थम् । अर्थाभावे अव्ययीभावः । 'तृतीयासप्तम्योर्बहुलम्' (पा. २।४।८४) इति अम्भावाभावः । स्तुत्यवलम्बनस्य अर्थस्य अभावे सति स्तुतिरनुचिता । इति कुतूहलम् ।

शूर्पेऽपि अन्नकरणत्वानुपपत्तेः स्तुतिर्न प्राप्नोति इति वार्तिकम् ।

अर्थस्तु विधिशेषत्वाद् यथा लोके । २९ ॥

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' इति विधाय 'तेन ह्यन्नं क्रियते' इति शूर्पस्य स्तुतिः क्रियते न हेतुवादः इति सिद्धान्तोपोद्बलकं सूत्रम् ।

अन्नरक्षे अर्थोऽस्ति स्तुत्यालम्बनकरणत्वं नाम । तदा च शूर्पेण जुहोतीति विधेः 'तेन ह्यन्नं क्रियते' इत्येष शेषो भवति । यथा लोके बलवान् देवदत्तो यज्ञदत्तादीन् प्रवहते इति । प्रकृष्टबलेऽपि बलवत्तया वर्तमानो न सिंहं शार्दूलं वा अपेक्ष्य प्रयुज्यते । ये तु देवदत्तात् निकृष्टबलाः तानपेक्ष्य भवति । एवं 'तेन ह्यन्नं क्रियते' इति प्रकृष्टान्नकरणेन सम्बन्धः शूर्पस्य निकृष्टानि अन्यानि अन्नकरणानि अपेक्ष्य भविष्यति । तस्मात् स्तुतिपरो वाक्यशेषः ।

यदि च हेतुरवतिष्ठेत निर्देशात्, सामान्यादिति चेदव्यवस्था विधीनां स्यात् । ३० ॥

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' इति शूर्पं विधाय 'तेन ह्यन्नं क्रियते' इति तस्य स्तुतिः कृता । नात्र हेतुवादः येन दर्वीपिठरादेरपि होमसाधनत्वेन प्राप्तिः स्यात् इति सिद्धान्तिना उक्तम् । इदं सूत्रं तु अभ्युपेत्यवादेन हेतुवादत्वेऽपि दोषप्रसङ्ग इति

प्राप्तिपरत्वोपपादनार्थत्वेन अर्थवत्त्वोपपत्तौ साध्या काङ्क्षापूरणात् सूत्रस्य अन्यूनत्वम् । इति सुधा. पृ. ८८ ।

विधिः स्यात् इति साध्ये अर्थवत्त्वोपपत्तिभ्याम् इति साधनस्य नान्वयो भवति इति, विधिः स्यात् इत्यत्र अपूर्वत्वात् इति हेतुः । अर्थवत्त्वोपपत्तिभ्याम् इति हेतोश्च दर्वीपिठरादेः प्राप्तिः इति साध्यं द्रष्टव्यम् । इति सुधार्थः ।

स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य । २७॥

वरुणप्रघासेषु करम्भपात्रहोमेषु ' शूर्पेण जुहोति ' इति शूर्पं विधाय तस्य हेतुत्वेन ' तेन ह्यन्नं क्रियते ' इत्युक्तम् । तेन शूर्पेण सह दर्वीपिठरादेरपि प्राप्तिः इति पूर्वपक्षे सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह ।

' शूर्पेण जुहोति ' इति विधिः । ' तेन ह्यन्नं क्रियते ' इति तस्य स्तुतिः न तु हेतुवादः । शब्दपूर्वत्वात् अन्नकरणत्वेन होमसाधनता प्रति हेतुत्वस्य वैदिकशब्दसमधिगम्यत्वात् । वेदश्च शूर्पस्य होमसाधनत्वे शूर्पगतम् अन्नकरणत्वं हेतुम् इच्छति, न तु दर्व्यादिगतमपि । अतः तस्य च दर्व्यादिकस्य अपि अचोदना भवेत् अन्नकरणं तेनैव ह्यात इति विधेः अभावः । इति कुतूहलम् ।

अन्नकरणतया हेतुत्वस्य प्रमाणान्तरानवसेयत्वेन शब्दैकसमधिगम्यत्वात् शब्देन च शूर्पेण होमकर्मत्वे अन्नकरणत्वस्य हेतुत्वाभिधानात् तस्य च ' शूर्पेण जुहोति ' इतिविधिसिद्धत्वेन हेत्वनपेक्षतया स्तुतिमात्रार्थत्वावगते शूर्पस्यैव शब्दविहितत्वात् तदवच्छेदे होमे दर्व्यादेः अचोदना इत्येव सूत्रं भाष्यकृता व्याख्यातम् । इति सुधा पृ. ८८ ।

एतदेव सूत्रम् अन्नकरणस्य होमसाधनतया कल्प्येन शब्देन चोद्यमानतया इत्यतः दर्व्यादेरकरणत्वात् अचोदना इत्यर्थपरम् । सुधा पृ. ८९ ।

व्यर्थे स्तुतिरन्याय्येति चेत् । २८ ॥

वरुणप्रघासेषु करम्भपात्रहोमेषु ' शूर्पेण जुहोति ' इति शूर्पं विधाय ' तेन ह्यन्नं क्रियते ' इत्युक्तम् । इदं वाक्यं शूर्पस्तुतिपरम् इति सिद्धान्तिना उक्ते पूर्वपक्षी शङ्कते । ननु प्रकृष्टसाधनत्वं यथा स्थाल्यादौ तथा न शूर्पे इति व्यर्थे प्रकृष्टसाधनत्वरूपेण अर्थेन धर्मेण रहिते शूर्पे विषये स्तुतिः अन्याय्या इति चेत् पूर्वपक्षी ब्रूयात् ।

अर्थस्याभावो व्यर्थम् । अर्थाभावे अव्ययीभावः । ' तृतीयासप्तम्योर्बहुलम् ' ( पा. २।४।८४ ) इति अम्भावाभावः । स्तुत्यवलम्बनस्य अर्थस्य अभावे इति स्तुतिरनुचिता । इति कुतूहलम् ।

शूर्पेऽपि अन्नकरणत्वानुपपत्तेः स्तुतिर्न प्राप्नोति इति वार्तिकम् ।

अर्थस्तु विधिशेषत्वात् यथा लोके । २९ ॥

वरुणप्रघासेषु करम्भपात्रहोमेषु ' शूर्पेण जुहोति ' इति विधाय ' तेन ह्यन्नं क्रियते ' इति शूर्पस्य स्तुतिः क्रियते न हेतुवाद इति सिद्धान्तोपोद्बलकं सूत्रम् ।

असत्यपि अर्थेऽस्मिन् स्तुत्यालम्बनकरणत्वं न्याय्यम् । तदा च शूर्पेण जुहोतीति विधेः ' तेन ह्यन्नं क्रियते ' इत्ययं शेषो भवति । यथा लोके बलवान् देवदत्तो यज्ञदत्तादीन् प्रसहते इति । प्रकृष्टत्वेऽपि अन्यस्यैष्यो वर्तमानो न सिंहं शार्दूलं वा अपेक्ष्य प्रयुज्यते । ये तु देवदत्तात् निकृष्टबलाः तानपेक्ष्य भवति । एवं ' तेन ह्यन्नं क्रियते ' इति प्रकृष्टान्नकरणेन शकटेन शूर्पस्य निकृष्टानि अन्यानि अन्नकरणानि अपेक्ष्य भविष्यति । तस्मात् स्तुत्यर्थो वाक्यशेषः ।

यदि च हेतुरवतिष्ठेत निर्देशात्, सामान्यादिति चेदव्यवस्था विधीनां स्यात् । ३० ॥

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' इति शूर्पं विधाय ' तेन ह्यन्नं क्रियते ' इति तस्य स्तुतिः कृता । नायं हेतुवादः येन दर्वीपिठरादेरपि तेन प्राप्तिः स्यात् इति सिद्धान्तिना उक्तम् । इदं तु अभ्युपेत्यवादेन हेतुवादस्वीकारेऽपि दोषप्रसङ्ग

करणस्य समनन्तरं अभ्यर्हितपूर्वं ) विरोधाधिकरणा-भ्युच्चय- (१।३।२) हेतुभूतहेतुदर्शनपरस्य स्वातन्त्र्येणापि अप्रामाण्यापादनशक्तिप्रतिपादनपरस्य आ विरोधाधि-करणप्रकारात् न तेन पृथक् सङ्गत्यपेक्षा । सोम. १।३।१.

• ' हेतुमति च ' ( पा. ३।१।२६ ) प्रयोजक-व्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात् । भवन्तं प्रेरयति भावयति । सि. कौमुदी.

• हेतुवदर्थवादाः धर्मे स्तुतिद्वारा प्रमाणम् । वि. १।२।३.

• हेतुवन्निगदः अर्थवादः ' शूर्पेण जुहोति ' 'तेन ह्यन्नं क्रियते ' इति । बाल. पृ. ५०. • हेतुवन्निगदः ' स वै मुनामैराम्रेऽभिघारयति ततो हि प्रथमामाज्य-भागौ यक्ष्यन् भवति ' इति । वा. ३।७।१।५, • हेतुवन्निगदानां अर्थवादत्वमुक्तम् । ३।६।७।१७ पृ. १०५२.

[redacted] हेतुवन्निगदाधिकरणम् । हेतुवत् निगद्य-मानमपि वाक्यं स्तावकमेव ॥

हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् । १।२।३। २६ ॥

भाष्यम्— अथ ये हेतुवन्निगदाः 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते ' इत्येवमादयः । तेषु सन्देहः, किं स्तुतिस्तेषां कार्यमुत हेतुरिति । किं प्राप्तम् ? हेतुः स्याच्छूर्पकरणे होमस्य । ननु अप्रसिद्धे कार्यकारणभावे न हेतुव्यपदेशः । सत्यमेवं लोके, विज्ञायिष्यते तु वचनेन वेदे । शूर्पेण होमे कर्तव्येऽयमत्र हेतुरित्युपदिश्यते । किं प्रयोजनम् ? अन्यदपि दर्वीपिठराद्यन्नकरणं यत्, तेनापि नाम कथं होमः क्रियेतेति । कुतः ? तस्याप्यन्न-क्रियासामर्थ्यस्य, शक्यते च तेनाप्यन्नं कर्तुम् । एतद्धि क्रियते इत्युच्यते । न हि वर्तमानकालः कश्चिदस्ति, यस्यायं प्रतिनिर्देशः । हेतौ च श्रुतिः शब्दः, स्तुतौ लक्षणा । यदि च दर्वीपिठरादि न साक्षादन्नं करोतीति नान्नकरणमित्युच्यते । व्यर्थं तस्मिन् शूर्पस्तुतिरनर्थिका स्यात् । शूर्पमपि हि न साक्षादन्नं करोतीति तेन विना-ऽर्थेन शूर्पस्य स्तुतिर्नोपपद्यते ।

वा— इह ये हेतुवन्निगद्यन्ते हिशब्दादिभिर्न च परमार्थहेतवस्तेषामुदाहरणम् । तत्र यदि तावद्धेतुरत्र विधीयते तत. पूर्वेणैव गतम् । यदिह हेतुत्वं तच्छूर्प-होमसम्बन्धं प्रति न चाविहितोऽस्त्यस्तीति कस्य हेतु-त्वच्यते । अथ भूतानुवादमात्रं तत्तु चायुक्तेऽपिद्धत्वादन-भिमतमेतत् । उच्यते । न तावदनेनैव वाक्येन हेतुत्वं विधीयते । न च भूतानुवादमात्रं किं तर्हि हेतो प्रसिद्धिपूर्वकत्वात्सिद्धवदुपदिश्यमानं वाक्यान्तरसिद्धस्याध्या-हारात्ततोऽपसिद्धम् । याऽपि चार्थवादा-काङ्क्षा कस्मादिति साऽप्यनेनैव हेतुना निवर्त्यते इति मन्यते । अथाप्यर्थवादत्वं तथाऽपि तदन्तर्निर्णीतहेतुत्व-मेवेति सर्वाधिकरणविषयं विज्ञायते ततश्च हेतुरस्त्य-स्तीति पूर्वः पक्षः । सम्बन्धस्य च विधेयत्वाच्छूर्प-मेव हेतुत्वं होमस्येति वदति । ' नन्वप्रसिद्धे कार्य-कारणभावे ' इति । केचिदाहुः । कार्यकारणयोरे-वानुमानम् । यथा च दर्शनेन्द्रियसामर्थ्येत्यत्रापि वक्ष्यति । तदयुक्तम् । अकार्यकारणभूतानामपि कृत्ति-कादीनां अविरोदुतयोहि व्याप्तिप्रतिपत्तिहेतुत्वदर्शनात् । अतो गम्यगमकत्वस्यैव सर्वकारणमात्रं मन्यते । ननु सोऽप्यनुमानोत्तरकालीनत्वादनङ्गम् । सत्यम् । अन्य-स्मिन्नेव तु सम्बन्धे सति पश्चात्प्रसिद्धमन्तरेणानुमि-मानस्यानवधानोपलक्षणत्वेनोपन्यस्यति । यद्वा शक्त्यभिप्राय-योरेव हि व्याप्तिग्रहणकाले गम्यगमकसामर्थ्यात्मना कार्यकारणभावविशेषेण साऽवभूता तत्रैव हेतुता । अथ चोदाहृतविषयहेतुलक्षणमेतत् ।

अविनाभावो ह्यनेककार्यकारणस्वस्वामिसहचरभावा-दिप्रभेदभिन्नः, तत्रान्नकरणता होमे हेतुत्वेनोच्यमाना सम्बन्धान्तराभावात् कारणत्वेन स्यात् । तच्चाप्रसिद्धं तस्मान्न हेतुव्यपदेशः । सत्य लोके हेतुव्यवहारकाल्यप्रथम-प्रमाणान्तरेण सम्बन्धप्रसिद्धिरपेक्ष्यते वेदे [redacted] हिशब्द-प्रतिपादितहेतुत्वान्यथानुपपत्त्या संबन्धाभिधायि दृष्टान्त-वचनं कल्प्येत यद्यदन्नकरणं तेन तेन जुहोतीति, तेन

चोपपन्न हेतुरयम्। 'किं प्रयोजनम्' इति। यदि न हेतुरवतिष्ठेतेत्यनेनाभिप्रायेण। अपरस्त्वाह स्थालीसिद्धाया सर्वावस्थसाधनसाधनको होम. सिद्धो भवति। 'कुतः' इति। स एव सिद्धान्ताभिप्राय.। अथवा कुतो दर्विपिठरादेः साधकतमत्वम्। इतरस्त्वाह अग्निक्रियायां तावत्तदर्थवत्त्वाऽस्ति तावन्मात्रं चाऽऽश्रयिष्यते। 'शक्यते च तेनापि' इति। उपपत्तिशब्दस्यार्थः। पूर्वेण समानार्थता गम्यते। तेन विवक्षा। शक्यमभिप्रायमेतत्। यदेव हि तदुपयोगिमात्रं तदेव शक्यते कथंचित्साधकतमत्वेन विवक्षितुम्। अथवाऽर्थवत्त्वं करणविभक्तिनिर्देशालम्बनमुपपत्त्या पुनर्वर्तमानाप्रक्रियस्य हेतुत्वाभिधानात्ताद्दशस्य होमं प्रत्यनुपपत्त्याशङ्कयोपपत्तिं वदति। शक्यते च तेनेति। तत्र चोदयति। एतद्धि क्रियत इत्युच्यते तस्य शक्यत इत्यभिधीयते। वर्तमानक्रियत्वात्सम्भवादित्युक्तम्। यद्वा स्वयमेवाऽऽशङ्क्य परिहरति। 'यदि च न दर्विपिठरादि' इति। उभयोः परामर्शः। साधकतमत्ववर्तमानत्वे चेत्तत्र न विद्येते शूर्पेऽपि तथैवेति स्तुतिर्न स्यात् तेन यथा तत्र स्तुत्यर्थ. कथंचित् विद्यते तथा मम हेत्वर्थ इत्यविशेषः। 'हेतौ च श्रुतिः' इत्यादि, अर्थवद्वाक्यमर्थवच्छेषात्ते द्रष्टव्यम्। 'स्तुतो लक्षणा' इति। अप्रकरणत्वेन सर्वजनाभिमतेन प्राशस्त्यं लक्ष्यते। 'शूर्पेण' इति चास्मिन् पक्षे नित्यानुवादोऽप्रकरणसामान्येनैव प्राप्तस्य। इत्थं वा सूत्रगमनिका। तदर्थत्वात्तावत्तदर्थत्वात्प्रयोजनवत्तरत्वमुपपत्तिरित्यप्रसिद्धम्, तत्र चोऽपि वाक्यनिष्ठवाक्याश्रवणात्। तस्माद्धेतुः।

**स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य। २७॥**

भाष्यम्— न त्वेतदस्ति, शब्दपूर्वकोऽयमर्थोऽप्रकरणं हेतुरिति। शब्दश्चाप्रकरणं शूर्पहोमे हेतुरित्याह। न च दर्वीपिठरहोमे, तेन शब्दपूर्वं शूर्पम्, न च दर्वीपिठरादेश्चोदना।

वा— शूर्पेणेति तावत्करणविभक्तिश्रवणैवात्यन्तो होमो नानुमानिकैर्दर्विपिठरादिभिः सह वाध्यविकल्पसमुच्चयान्प्रतिपद्यते। होमश्च तेन निराकाङ्क्षीभूतो नान्यत्प्रार्थयते। अनुत्थितायामेव च दर्विपिठरादिश्रुतौ शूर्पं प्राप्नुवच्छ्रुत्यनुमानं प्रतिबध्नाति। तेन ब्रवीति— 'अचोदना च तस्य' इति। हेतुपदेशश्च स्तुत्यैवोपपद्यमानः सत्त्वश्रुतदृष्टान्तकल्पनायै प्रभवति। शूर्पश्रुतिश्च विध्युद्देशपातिन्यनन्यप्रयोजना विस्पष्टा च सती परित्यक्तुं न युज्यते। तस्माद्यद्धाऽप्रकरणत्वादित्येव कर्तव्य इत्यनेनापेक्षितत्वाल्लक्षणयैतत्प्रतिपादयति प्रशस्तत्वादिति। अथवाऽप्रकरणत्वादिति श्रुतिवृत्तमेव। तत्र यथाश्रुतं विध्युद्देशो हेतुतामप्रतिपद्यमान तदनन्तराकाङ्क्षितार्थोपप्लुतहेत्वपेक्षयाऽऽत्यवहेतुत्वधार्यते, अप्रकरणत्वात्प्रशस्त इति। कल्पनाद्ध्येऽपि च लोकप्रसिद्धदृष्टान्ताभावाश्रुतवद्वाक्यानुमानप्रसङ्गो भविष्यति। सिद्धं हि प्रशस्तानां कर्तव्यत्वमप्रकरणानां च प्रशस्तत्वमिति। अचोदना च तस्येति व्याख्यान्तरम्। तत्र हि यद्यदप्रकरणं तच्चोद्यते न च दर्विपिठरादीनां करणता साधकतमस्य पाकादेः करणत्वात्। एवं चोत्तरसूत्रमापतति।

**व्यर्थे स्तुतिरन्याय्येति चेत्। २८॥**

भाष्यम्— इति पुनर्यदुक्तं तत्परिहर्तव्यम्।

वा— यत्पुनः शूर्पेऽप्यप्रकरणत्वानुपपत्तेः स्तुतिर्न प्राप्नोतीत्युक्तं किं तत्राभिधीयते।

**अर्थस्तु विधिशेषत्वाद् यथा लोके। २९॥**

भाष्यम्— अस्मत्पक्षेऽर्थोऽस्ति। वाक्यशेषो हि स विधेस्तदा भवति। संवादश्च स्तुतिवचनत्वेन, यथा वयं शूर्पेणान्नं क्रियमाणं जानीमः, तथा शूर्पेणान्नं क्रियते इत्येव गम्यते। तदा चावर्तमानं स्तोतुं वर्तमानमित्युपदिशति। त्वत्पक्षे एष दोषो यस्य ते हेतुविधिः। विधौ हि न पर. शब्दार्थः प्रतीयते। न च वर्तमानमुपदिशन् वेद. शक्यमर्थं विदध्यात्। अस्मत्पक्षे तु एष परशब्दः परत्र वर्तते। यथा लोके 'बलवान्देवदत्तो यज्ञदत्तादीन् प्रसहते' इति। प्रकृष्टबलेऽपि बलवच्छब्दो वर्तमानो न सिंहं शार्दूलं वाऽपेक्ष्य प्रयुज्यते, ये देवदत्तात्तु निकृष्टबलास्तानपेक्ष्य भवति। एवं तेन

हेतुत्वादवश्यं तद्गतमेवान्नकरणत्वं वक्तव्यम् । सन्निवेशश्च तदवच्छिन्नमेव तद्गम्यते । लोकेऽपि च यं धर्मिणं प्रतिज्ञाय यो हेतुरुपदिश्यते स प्रथमं तावत्तद्गतविशेषात्मनैव प्रतीयते । तदात्मकस्य तु साध्यांशानुगमाभावात्सामान्यमात्रं विवक्षितमिति दृष्टान्तप्रयोगवेलायामेवावधार्यते, येषु हेतूनां पुनर्न सामान्यात्मना साध्यसम्बन्धोऽवगतो न विशेषात्मना सोऽधुनैवार्थापत्त्या कल्पनीयः । तत्र विशेषस्योपादानात्सामान्याप्रसिद्धेश्च तत्परित्यागनिमित्तस्यासंभवादुपात्तविशेषमात्रोपसंहृतान्यथानुपपत्तिस्तद्गतमेव दृष्टान्तवचनं कल्पयति । तदकल्पने हि हेतुनिर्देशः श्रुतो विरुध्यते । यदि दर्विपिठरादिगतान्नकरणत्वहोमसाधनाविनाभावो न कल्प्यते । न किंचिच्छ्रुतं दृष्टं वा नावकल्पते । तस्मादीदृशं दृष्टान्तवचनं कल्प्यं यच्छूर्पगतान्नकरणं तेन तेन जुहोतीति । तदेतद्विशेषदृष्टमनुमानम् । लोकेऽपि तृणधूमदर्शनात्तृणाग्निरेवानुमीयते नाग्निमात्रम् । यथा च गमनं गोशब्दस्य व्युत्पत्तिनिमित्तत्वेन उपादीयमानं सास्नादिमत्सामान्यप्रत्ययोत्तरकाले तद्गतमेव निमित्ततां प्रतिपद्यते न गन्तृमात्रविषयमिति गोशब्दव्यवस्था तथा शूर्पगतान्नकरणादेरपदेशान्न यत्तद्धेतुत्वप्रसङ्गः । तस्मैतावानर्थः स्यात् । यद्यदन्नकरणसमर्थं शूर्पं तेन तेन होतव्यं न दर्विपिठरादिग्रहणम् । यथा वल्न-दुपक्रमेऽग्नौ दहनहेतुत्वेनोक्ते स एवानुपध्मातो न दहेन्न तु शष्पादयो वन्यदुपध्माता दहन्ति । तस्माद्यथावस्था । यदि पुनः शूर्पगतान्नकरणव्यतिरेकेण महासामान्यं विवक्ष्येत ततो यद्यद्गृहीतं तस्य तस्य काचिदसन्निमित्तता नियता इत्यव्यवस्थितत्वाद्धोमाक्षिप्तद्रव्यमात्रानुवादः सन्ननर्थकोऽन्नकरणशब्दः । तस्मादन्नहेतुत्वेन स्तुतित्वमेव वरमिति ।

शा— एवम् आनर्थक्यप्रतियोगिनो विधिप्रतियोगिनश्च अर्थवादा विचारिताः । इदानीं हेतुप्रतियोगिनो विचार्यन्ते । एवं श्रूयते 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इति । तत्र संशयः किं शूर्पेण होमे कर्तव्ये अन्नकरणत्वं हेतुः उत अर्थवाद इति । तत्र हि शब्दश्रुत्या हेतुत्वं गम्यते, लक्षणया प्राशस्त्यम् । अनर्थकप्रायश्च अर्थवादः । हेतुस्तु अर्थवान् । कः पुनरर्थो हेतोः ? येन येन अन्नं क्रियते शूर्पादन्येनापि दर्वीपिठरादिना तेन तेनापि होमसिद्धिः हेतोः प्रयोजनम् । कथमप्रसिद्धाया व्याप्तेः हेतुत्वव्यपदेशः ? अत एव हेतुव्यपदेशात् व्याप्तिमन्तरेण अनुपपद्यमानात् व्याप्तिवचनं कल्प्यते, येन येन अन्नं क्रियते तेन तेन होतव्यमिति । तेन वचनेन सर्वान्नकरणविधायिना शूर्पस्यापि होमसाधनत्वसिद्धेः 'शूर्पेण जुहोति' इति अनुवादः । तेन ईदृशमिदं वाक्यं श्रुतानुमितैकदेशनिष्पन्नं शूर्पस्य होमसाधनत्वं अन्नकरणत्वात् हेतोः, अतः शूर्पं अन्यत् वा यत् अन्नकरणं तेन होतव्यमिति पूर्वः पक्षः । सिद्धान्तस्तु शूर्पस्य तृतीयाश्रुत्या करणत्वं गम्यते, न तत् आनुमानिकैर्दर्वीपिठरादिभिर्विकल्पितुमर्हति । न च वेदेन उच्यमानं शूर्पस्य होमसाधनत्वं हेतुमपेक्षते, वेदस्यैव तत्र प्रमाणत्वात् अर्थवादस्तु अपेक्षितः प्ररोचनार्थत्वेन । तस्मादर्थवादत्वम् । एवं च अप्रसिद्धव्याप्तिवचनकल्पनाक्लेशो न भविष्यति । 'क्रियते' इति च अवर्तमाने वर्तमाननिर्देशः प्ररोचनार्थत्वे युक्तो भवति । नहि भूते भाविनि वा तादृशी प्रीतिः यादृशी वर्तमाने । तेन स्तुत्यर्थत्वेन लक्षणया वर्तमाननिर्देशो युक्तः । विध्यर्थत्वे तु निष्प्रमाणकं लक्षणाश्रयणम् । तस्मात् अर्थवादत्वम् ।

**सोम**— यदुक्तं सर्वेषां विधिनिगदानां स्तुत्यर्थत्वमिति, तदयुक्तम् । केषुचित् हेतुविधिसंभवात् इति पूर्वाधिकरणोक्ताऽऽक्षेपेण प्रवृत्तेः संगतिः । सूत्रार्थस्तु— 'तेन ह्यन्नं क्रियते' इति हेतुविधिः स्यात्, तथा सति दर्व्यादीनामपि होमसाधनत्वलाभेन अर्थवत्त्वात् हिशब्दश्रुत्युपपत्तेश्च ।

वि— 'तेन ह्यन्नमिति प्रोक्तो वादो हेतुवत् स्तुतिः ।, दिना श्रुता हेतुताऽत्र शूर्पमन्यच्च साधनम् ॥, शूर्पसाधनता श्रौती नाश्रौतेन सा विकल्प्यते । अतो निरर्थको हेतुः स्तुतिस्तस्मात्प्रवर्तिका ॥'

भाट्ट— चातुर्मास्ये 'शूर्पेण जुहोति' इति शूर्पकरणकहोमं विधाय श्रुते 'तेन ह्यन्नं क्रियते' इत्यर्थवादे न स्तुतिलक्षणा। अपि तु होमसाधनत्वे साध्ये अन्नकरणत्वस्य हेतुत्वं विधीयते। न ह्यत्र पूर्ववत् मन्यत्र इव किञ्चित् कल्पनीयमस्ति, हिशब्दश्रुत्यैव हेतुत्वाभिधानात्। हेतुश्च व्याप्तिमन्तरेणानुपपन्नः यद्यदन्नकरणं तेनतेन होतव्यमिति व्याप्तिवचनं कल्पयति। ततश्च शूर्पादन्यस्यापि दर्वीपिठरादेर्होमसाधनत्वप्रतीतेः विधौ शूर्पपदमुपलक्षणम्, अवयुत्यानुवादो वा। यद्वा—तच्छब्देन शूर्पस्यैव परामर्शात् तद्गतमेवान्नकरणत्वं हेतुः। तेन च विशिष्यैव व्याप्तिकल्पनात् अन्नकरणासमर्थशूर्पव्यावृत्तावपि न विधिरयं शूर्पपदमन्यथा नेयमिति पूर्वः पक्षः। सिद्धान्तस्तु— क्रियते इति लडन्तनिर्देशात् वर्तमानान्नकरणत्वस्य हेतुत्वं वाच्यम्। न च होमकाले अन्नकरणत्वं सम्भवति। अतो लटः भूतभविष्यत्कालान्तरलक्षणा विधौ तथाप्यावश्यकी। यद्यपि चेयं प्राशस्त्यलक्षणोपयोगिगुणघटकतया समाप्यावश्यकी, तथाऽप्यनुवादस्यत्वात् प्राशस्त्योत्पादकत्वाच्च न दोषः, वर्तमाननिर्देशं विना तदप्रतीतेः। किंच, अपेक्षितप्राशस्त्यपरत्वे संभवति नानपेक्षितहेतुपरत्वाश्रीकारो युक्तः। अतः सिद्धं सर्वेषामर्थवादानां स्तावकत्वेन प्रामाण्यम्।

मण्डन— 'स्तुतिः शूर्पेऽन्नाहेतुत्वम्।'

शंकर— 'शूर्पे हेतुविधिर्नास्ति।'

● हेतुवन्निगदाधिकरणं अर्थवादाधिकरणस्यैव शेषः। सु. पृ. ९३.

● हेतुविधिः अर्थवादः — 'चतुर्गृहीतान्याज्यानि भवन्ति, न ह्यत्रानुयाजान् यक्ष्यन् भवति' इति। वाल. पृ. ५२, ● हेतुविधिर्मन्त्रः — 'इन्द्रो वासुगन्ति हि' इति। पृ. ६१.

● हेतुविधिस्वरूपो मन्त्रः — 'द्वादशार न हि तज्जराय' इति। वाल. पृ. ६२.

● हेतुविपर्यये प्रायेण कार्यविपर्ययो दृश्यते। पा. २।४।२।११ पृ. ६३८.

● हेतुहेतुमतोर्लिङा विधिः — 'यदि ब्राह्मणो यजेत' इति। वाल. पृ. २९.

● हेत्वाभासाः। अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानप्रकारो हेतुनिष्ठो दोषः हेत्वाभासः। भवति च असिद्धत्व–अनैकान्तिकत्व–बाधकत्वादिज्ञानाभावः प्रतिबन्धकाभावविधया अनुमितिकारणीभूतः तत्प्रतियोगिप्रमाप्रकारकत्वं असिद्धत्वादीनाम्, तेन हेतुनिष्ठो दोषो हेत्वाभासः। यादृशविशिष्टविषयत्वेन यथार्थज्ञानस्य अनुमितिप्रतिबन्धकत्वं तत्त्व इति यावत्। यद्वा तादृशप्रमाविषयत्वम्। (तत्त्व इत्यस्य स्थाने) तेन दुष्टो हेतुर्हेत्वाभासः। 'धूमो वह्निव्यभिचारी' इत्यादिभ्रमवारणाय यथार्थेति। उपाधिवारणाय कारणेति। उपाधिज्ञानस्य साक्षात् प्रतिबन्धकत्वाभावेन तदभावस्य अनुमितिप्रयोजकतया हेतुत्वाभावात्।

ते (हेत्वाभासाः) त्रयः असिद्धानैकान्तिकबाधकाः। तत्र असिद्धिः स्वरूपासिद्धिः सम्बन्धासिद्धिः व्यतिरेकासिद्धिः आश्रयासिद्धिः व्याप्यत्वासिद्धिः इति पञ्चधा। तत्र हेत्वप्रसिद्धिः स्वरूपासिद्धिः। 'बुद्धो धर्माधर्मवेदी सर्वज्ञत्वात्' इति। अत्र सर्वज्ञत्वं हेतुः अप्रसिद्धः। पक्षे व्याप्यत्वेन अभिमतस्याभावः स्वरूपासिद्धिः इति अक्षपादीयमते तु ईश्वरे प्रसिद्धिसत्त्वे बुद्धे तदभावात् असिद्धिः।

पक्षे व्याप्यत्वाभिमतस्य हेतुतावच्छेदकसंबन्धेनाभावः संबन्धासिद्धिः। वह्निरदाहकः शीतत्वात् इति।

पक्षतावच्छेदकहेत्वोरभेदे व्यतिरेकासिद्धिः। गोशब्दः सास्नादिमद्वाचकः गोशब्दत्वात् इति। असाधारणानैकान्तिक इति अक्षपादीयाः। इदमेव पक्षमात्रवृत्तित्वं असाधारणस्य। अत्र साध्याभावसाधकतया अनुमितिप्रतिबन्धो दूषकतावीजम्।

पक्षाप्रसिद्धिः आश्रयासिद्धिः। आकाशो नित्यः निरवयवद्रव्यत्वात् इति। शौद्धान्तिकं (बौद्धं) आकाशामानवादिनं प्रति आश्रयासिद्धिः। पक्षावच्छेदकाप्रसिद्धिरपि सा। काञ्चनमयपर्वतो वह्निमान् इति।

सितरयाच मुख्यहोतैवोच्यते । ततश्चैकस्या याज्याया होतृप्रशास्त्रोर्वैकल्पिकत्वः, न त्वेकस्मिन्नेव प्रशास्तरि वषट्कर्तरि प्रैषयोर्विकल्पः । अथवा, मैत्रावरुणेनेवाध्वर्युणाऽपि होता प्रैषणीय इति न कोऽपि विकल्प इति । संकर्ष. २।३।१४.

● ' होतारमध्वर्युर्दीक्षयति ' । वि. ३।७।१७.

※ होतारमपि जुह्वानं स्पृष्टो दहति पावक इति न्यायः । अयं चण्डकोपाना कश्चिदपि प्रियो न भवतीति द्योतयतीति । साहस्री. ९८७.

● होतारं वृणीते । भा. ३।७।९।२४, ● होत्रा हौत्रं कर्तव्यम् । ३।७।१९।४०, ● होत्रे ऋग्भिर्युक्तं रथं ददाति वाजपेये नान्य न चान्यस्मै । १०।३।२१। ७५. ● होतुः अध्वर्योश्च एकस्मिन् पात्रे यदा भक्षण तदा लिङ्गवाक्याभ्या होतुः प्रथमभक्षणं ततोऽध्वर्योः । न तु अध्वर्योः प्रथमभक्षः । वि. ३।५।१३. ● होतुरपि अध्वर्युवचनात् प्रवरेषु आनुपूर्वीनियमः । संकर्ष. ३।४।८. मीको. पृ. १००५ ' आर्षेयवरणे अध्वर्युवशात्० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ● होतुरेव ऊर्ध्वज्ञुत्वादिर्वरणधर्मः, न सर्वेषामृत्विजाम् । संकर्ष. ४।२।५. मीको. पृ. १८२१ ' वरणधर्मः ऊर्ध्वज्ञुत्वादिः० ' इत्यत्र अधिकरण द्रष्टव्यम् । होतुरेव प्रवर पूर्वः, अध्वर्योरुत्तरः । संकर्ष. ४।२।६. मीको पृ २८१० ' प्रवरः होतुरेव पूर्वः० ' इत्यत्र अधिकरण द्रष्टव्यम् । ● होतुः वरणमन्त्रस्यानुज्ञातृत्वम् । भा. ३।८।१०।२१ पृ. ११२६. ● होतुः कृत्स्नेडाभक्षस्य अप्यूर्ध्वा निवृत्तिः आग्नेयाग्नेये पशौ । १०।७।४। १९-१६. मीको. पृ. ११५ ' अप्यूर्ध्वा-याग. ' इत्यत्र अधिकरणं द्रष्टव्यम् । ● होतुः क्रियमाणानुवादी मन्त्र पुरोडाशप्राशे ' भुवा भुवाग्रा० ' इति । भा ३।८।१०। ११, ● होतुर्भक्षः । होता यत्र वदति, वनिष्यति, भनक्षिति, ■ होतुर्भक्षः । ३।५।७।२२. ● होतुर्भक्षणाभावे वषट्कारः कारणम् । वि. ३।५।१०. ● होतुः पुरस्तात्पश्चात् मैत्रावरुणः, अच्छावाकः, ब्रह्मानुगः च । वि. ३।७।१७. ● होतुः पृष्ठ वैरूपं विश्वजिति सर्वपृष्ठे । भा. १०।६।५।१४. ● होतुः पृष्ठे निवेशो वैरूपादिसाम्ना उक्थ्यादिक्रतौ, न कृत्स्ने क्रतौ । १०।६।६।१५-२१. मीको. पृ. १०८६ ' उक्थ्यादिक्रतौ बहुव्रीहिपदनिर्दिष्टाना० ' इत्यत्र अधिकरण द्रष्टव्यम् । ● होतुः पृष्ठस्तोत्रे एव बृहद्रथन्तरयो समुच्चित्य निवेशः सप्तदशी उभयसामके क्रतौ । १०।६।८।२४-२६. मीको. पृ. ४०३६ ' सप्तदशी उभयसामके क्रतौ० ' इत्यत्र अधिकरण द्रष्टव्यम् । ● होतुः पृष्ठस्तोत्रार्थं पार्ष्ठिकरथन्तरादिसाम्ना मध्ये वैरूपस्यैव निवेशः विश्वजिति । १०।६।५।१३-१४. मीको. पृ. ३६९० ' विश्वजिति पार्ष्ठिकरथन्तरादिसाम्ना मध्ये० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ● होतुः प्रथम भक्षः एकपात्रे बहुभिः सोमभक्षणे । ३।५।१३। ३६-३९. मीको. पृ. १७९२ ' ज्योतिष्टोमे एकपात्रे बहुभिः० ' इत्यत्र अधिकरण द्रष्टव्यम् । ● होतुः प्राग् वरणात् सामिधेनीकर्मणा संयोगः ' अवृतः सामिधेनीरन्वाह ' इति । भा. १२।१।१८।४१. ● होतुर्याज्यापाठनेऽपि यजमानादन्यो नान्यो नायस्यैव ज्योतिष्टोमे क्रतुमद्यागेषु यजमानस्य स्वयं याज्यापाठाय । भा. ३।८।१८।४४-४६. ● होतुः वरण अदृष्टार्थम् । तन् देष्टिकेषु कर्मसु दीक्षणीयादिषु कर्तव्यम् । भा. १२।१। १८।४१. ● होतुः वरण दृष्टादृष्टार्थमेव, वरणात् प्रागपि सामिधेनीषु तस्य प्रवृत्तेः । अत एव ज्योतिष्टोम गौष्ठिकेषु सोमिककरणात् पृथगेष्टिके वरण कर्तव्यम् । वि. १२।१।१८. ● होतुः वषट्कर्तृत्वे भक्षहेतुः सवनमुखं च । निमित्तयोश्च समुच्चयः । प्रतिनिमित्तमभ्यास भिन्नम् । ३।५।१२. ● होतुर्विहारदेशे तन्त्रम् । पद्मप्रयोगेषु । ११।३।१०।४४-४८. ● होतुः नैत्र साम विश्वजिति । भा. ७।३।३।८.

● होत्रादीनां च सदसि धर्मस्थाने. अदरे वषट्कारसमाप्त्यनिमित्तमर्थं सदसि होतारः आनेतव्याः । भा. ३।५।११।१२.

● होतृकामः ' य कामयेत यजमानं भ्रातृव्यमस्य स्यात् तस्य वषट् कुर्यात् ' इत्यादिः दर्शपूर्णमासादौ

अन्वयेत । अस्थियज्ञे मृताधिकारपक्षे तु न संभवति । वि. १०।२।२२. ● होतृकामानामननुग्रान अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।२२।५६–५७. मीको. पृ. ७६० (६) 'अस्थियज्ञस्य मृताधिकारित्वपक्षे होतृकामनया० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● होतृपुरुषः प्रास्तुत् नाम ज्योतिष्टोमे । भा. ३।५।१।२७.

● होतृमैत्रावरुणयोः द्वयोः वरण निरूढपशुबन्धे । संकर्ष. ३।४।१३. मीको. पृ. २३७१ 'निरूढ० पशुबन्धे होतृ० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

⁂ होतृवरणं दार्शिकं ज्योतिष्टोमे इष्टिपशुषु कर्तव्यम्, ब्रह्मवरणं तु न कर्तव्यम् ॥

प्रवृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियेत । १२।१।१८।३६ ॥

भाष्यम्— दर्शपूर्णमासयोः होतुर्वरण आम्नातम् ' अग्निर्देवो दैव्यो होता देवान् यक्षत् ' इति । तत् चोदकेन ऐष्टिकेषु कर्मसु सोमाङ्गभूतेषु प्राप्यते । अस्ति तु सोमेऽपि होतुर्वरण ' अग्निर्होता स मे होता होतस्त्वं मे होताऽसि इति होतारं वृणीते ' इति । तत्र विचार्यते, किं ऐष्टिकेषु कर्मसु दार्शपौर्णमासिक होतुर्वरण कर्तव्यं उत नेति । किं प्राप्तम् ? न कर्तव्यमिति । कस्मात् ? वरण तावदानन्त्यर्थम् । सौमिकेन च वरणेन आनतो होता । तादृश्य सोमस्य वरणेन च आनतस्य आनमनकार्यमस्ति । तस्मान्न कर्तव्यम् । एवं प्राप्ते, ब्रूमः । प्रवृत्तवरणात् प्रतितन्त्र वरण होतुः क्रियेत । नैतदस्ति, ' सौमिक वरण प्रमन्त्रान् दार्शपौर्णमासिकस्य कार्य साधयिष्यति ' इति । प्रवृत्ते वरणात् , प्रवृत्ते कर्मणि दार्शपौर्णमासिक वरणं क्रियते । अतस्तन् नानन्त्यर्थम् । किं तर्हि ? कर्ममात्रम् । न चेत् क्रियेत तेन गुणवैगुण्य स्यात् । तस्मात् प्रतिकर्म भेदेन कर्तव्यम् ।

ब्रह्माऽपीति चेत् । ३७ ॥

भाष्यम्— इति चेत् पश्यसि प्रवृत्तवरणात् होतुर्वरणं प्रतिकर्म कर्तव्यमिति, ब्रह्माऽपि प्रवृत्ते कर्मणि क्रियते प्रणीताप्रणयनकाले । तस्मात् तस्यापि वरण धर्ममात्रम् । अतस्तदपि प्रतिकर्म कर्तव्यम् । वक्तव्यो वा विशेषः ।

न प्राङ्नियमात् तदर्थं हि । ३८ ॥

भाष्यम्— न ब्रह्मवरणं कर्तव्यम् । किं कारणम् ? प्राङ्नियमात् प्राग्वरणादित्यर्थः । सत्यम्, प्रवृत्ते कर्मणि ब्रह्मणो वरणम् । प्राग्वरणात् न किंचित् ब्रह्मत्वमस्ति । वरणादुत्तरकाले ब्रह्मणः कर्म, तदर्थं वरणं कर्मार्थम् । तस्मान्न धर्ममात्रम् । किमर्थं तर्हि ? आनत्यर्थमेव । सौमिकेन वरणेन आनतोऽसौ । तस्मात् ब्रह्मवरणं न कर्तव्यम् ।

निर्दिष्टस्येति चेत् । ३९ ॥

भाष्यम्— अथोच्येत, अस्ति अमावास्याया औपवसथ्ये अहनि वेदिकर्म निर्दिष्टम्, ' पूर्वेद्युरमावास्याया वेदिं करोति ' इति । तत्र वेदिपरिग्रहप्रवृत्तः ब्रह्मणा क्रियते । तेन ब्रह्माऽपि प्रवृत्तवरण इति ।

नाश्रुतित्वात् । ४० ॥

भाष्यम्— पूर्वेद्युरमावास्याया वेदिकरणं श्रुतम्, न परिग्रहणम्, अश्रुतत्वात् । यथाकालमेव वृते ब्रह्मणि परिग्रहः करिष्यते, वरणस्य कर्मार्थत्वात् । न प्राक् वेदिकरणात् पूर्वपरिग्रहः । तथापि ब्रह्मणा प्रवृत्तो दातव्यः । बाढम् । अथ तर्हि अन्यः परिहारः । दर्शपूर्णमासप्रकरणे हविषा अभियासनादूर्ध्वं वेदिकरणमाम्नातम् । ब्रह्मवरणमपि प्रणीताप्रणयनकाले प्राक् ब्रह्मत्वप्रवृत्तेः दृष्टार्थत्वात् आनत्यर्थम् । एवं स्थिते अमावास्याया वेदिकरणं वचनेनोपदिष्टम् । तस्मिन्नपकृष्यमाणे परिग्रहोऽपि अपकृष्टः, प्रसन्नोऽपि, ब्रह्मवरणमपि, प्रधानदेशकालत्वात् गुणानाम् । एवं सति पौर्णमास्या प्रणयनकाले ब्रह्मवरणम्, अमावास्याया पूर्वेद्युः । उभयत्र अप्रवृत्ते ब्रह्मत्वे । तस्मादुभयत्र आनन्त्यर्थम् । अतो न प्रतिकर्म ब्रह्मवरण कर्तव्य सौमिकेनैव वरणेन आनतत्वात् ब्रह्मणः ।

होतुस्तथेति चेत् । ४१ ॥

भाष्यम्— इति चेत् पश्यसि, यद्यपि प्रवृत्ते कर्मणि ब्रह्मणो वरणम्, न च वरणात् प्राक् किंचित्

एव । भा. ६।५।११।४०, ● होमाः कर्मसंयुक्ताः यथाद्यः उदाहरणम् । एते हि सर्वकर्मणां क्रत्वादीनां शेषभूता उत वैदिकादीनां अग्निहोत्रादीनां इति संशये वैदिकाना एव शेषभूताः इति सिद्धान्तः । ३।४।९। १९–२७. ● होमाः चतुर्विधाः– ऐष्टिकाः, पाशुकाः, सौमिकाः, दार्विहोमाश्चेति । वि. ११।३।२. ● होमस्य त्यागात्मकत्वम् । भा. २।२।१।२५ पृ. ५४३. ● होमस्य पुरुषार्थस्य दीक्षितकर्तृकत्वपर्युदासः ज्योतिष्टोमे । १०।८।७।१२–१५. 'नदीक्षिताधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । ● होमस्य फलार्थत्वम्, अभिषवस्य च होमार्थत्वम् । भा. ३।५।११।३२, ● होमस्य मन्त्रदेवताविशिष्टत्वम् । २।२।१२। २५. ● होमस्य यागात् भिन्नता । 'तथा शब्दार्थसंकल्पस्मृतिविरहावधारणात् । प्रक्षेपाधिकतामात्राद्यागाद्धोमस्य भिन्नता ॥' वा. ३।१।१।१ पृ. ६४९. ● होमयोः । पिष्टलेपफलीकरणहोमयोः अनूयाजोत्तरत्वं नास्ति । भाट्ट. ५।१।१५. ● होमानामुपनयनादीनां लौकिकाग्नावनुष्ठानम् । ६।८।२।११–१९. मीको. पृ. ११४७ 'उपनयनहोमाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । ● होमानामेव नामधेयं दर्विहोमशब्दः, न यागानाम् । ८।४।१।४. मीको. पृ. १०१८ 'दर्विहोमशब्दः होमानामेव०' इत्यत्र अधिकरणं द्रष्टव्यम् । ● होमानां भेदनादिनिमित्तकानां दर्शपूर्णमासमात्राङ्गता । ६।२।१५।४५–४७. मीको. पृ. २०६९ 'दर्शपूर्णमासाङ्ग भेदनादिनिमित्तकहोमाः' इत्यत्र अधिकरणं द्रष्टव्यम् । ● होमानां मूलप्रकृतिः अग्निहोत्रम् । वि. ८।१।३ वर्णकं २. ● होमानां लौकिकानामेव वाचकः पाकयज्ञशब्दः । संकर्ष. २।४। ११. मीको. पृ. २५३४ 'पाकयज्ञशब्दः लौकिकहोमानामेव वाचकः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

■ होमे पुरस्तात्स्वाहाकारा अपि मन्त्राः करणम् ॥

'पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा' इत्यादौ मन्त्रान्ते पठ्यमानस्वाहाकाराणां प्रदानार्थत्वेऽपि 'स्वाहा वाचे स्वाहा वाचस्पतये' इत्यादौ पुरस्तात्पठ्यमानाना न तदर्थत्वम्, स्वस्थानप्रच्युताना नः पृष्ठस्थादीना कण्डूयनाऽङ्कुरणादिकार्याक्षमत्वदर्शनात् । अत एव इत्पदस्य गिरापदस्थाने एव निवेशो द्विरावृत्तिश्च कल्प्यते । तस्मात् 'स्वाहा यज्ञं वातादारभे' इत्यादावपि ■ होमार्थता । इति प्राप्ते, तत्र चतुर्थ्या अभावात् सम्प्रदाननिर्धारणेन होमार्थत्वाभावेऽपि यागादीना चतुर्थ्यन्तत्वेन देवतात्वावगमात् यत्र क्वापि स्थितस्य दीयस्वेव पदस्याव्यवधानाक्षरस्थानसाम्याद्ब्राह्मणाय देहि देहि ब्राह्मणाय इति वाक्याभ्यामविशेषेण बोधानुभवाच्च प्रदानार्थत्वैव । अत एव 'पुरस्तात् स्वाहाकारा वा अन्ये देवा उपरिष्टात् स्वाहाकारा वा अन्ये' इति श्रुत्योभयोरपि प्रदानार्थत्वमनूद्यते । संकर्ष. २।४।१७.

● होमेषु आहवनीयसंयोगो भवति । भा. ३।४। ९।२६. ● होमेषु सर्वेषु । अनारभ्योच्यते 'चतुर्गृहीतं जुहोति' इति सर्वहोमेषु । भा. ४।१।१७।४८ । अनारभ्यविधानात् होममात्रे चतुर्गृहीतम् । या.

● 'होमाङ्गस्य च (मन्त्रस्य) याज्यात्वं न कस्यचिदपीष्यते ।' वा. ३।२।५।१२ पृ. ७६१.

● होमान्तं यावदानमेकः पदार्थः । तेन दर्शपूर्णमासयोः आग्नेयाग्नीषोमयोः अनुसमयः । वि. ५।२।४.

● होमाभिषवौ ज्योतिष्टोमे सोमभक्षणे एकं निमित्तम् । ६।८।७।२४–२५. मीको. पृ. १८३७ 'ज्योतिष्टोमे होमाभिषवौ सहितौ०' इत्यत्र अधिकरणं द्रष्टव्यम् । ● होमाभिषवौ सोमभक्षे समुच्चित्य निमित्तान्तरम् । ३।५।११।३२. मीको. पृ. १८११ 'ज्योतिष्टोमे सोमभक्षे०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

■ होमाभिषवाभ्यां च । ३।५।११।३२ ॥

सिद्धान्तसूत्रम् । सोमभक्षस्य निमित्तद्वय प्रागुक्तम् । तृतीयनिमित्तप्रतिपादनार्थमिदं सूत्रम् । सोमस्तो अवहृत्य रसनिष्पादनं अभिषवः । होमश्च अभिषवश्च ताभ्यां उभाभ्यां मिलित्वा एकेन निमित्तेन तृतीयेन सोमं भक्षयेत् । चकारः पूर्वनिमित्तसमुच्चयार्थः । पूर्वसूत्रात् भक्षयेत् इति पदस्यानुवृत्तिः । तृतीयमिदं

निमित्तं अध्वर्योरवयुज्यते । न च अध्वर्युचमस इति समाख्याऽस्ति । नापि तस्य प्रायो वषट्कर्तृत्वम् । के.

• होमाभिषवयोः कर्ता भक्षणं प्रति व्यङ्गत्वेन पूर्वपक्षत्वात् 'हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा०' इत्यनेन निर्धीयते । वि. ६।४।७, • होमाभिषवयोः सहितयोः भक्षणनिमित्तता न प्रत्येकम् । ६।४।७.

• होमाभिषवनिमित्ताः वषट्कारनिमित्ताश्च सोमभक्षा ज्योतिष्टोमे । ते च न प्रतिपत्त्यर्थाः किन्तु संस्कारार्थाः । भा. १०।२।९।२९.

• होमाभिषवनिमित्तकभक्षप्रतिपादनं ज्योतिष्टोमे । भा. ३।०।११।२२ पृ. १००९.

## होमाभिषवभक्षणं च तद्वत् । ३।४।७।२४ ॥

अग्निष्टोमे 'हविर्धाने ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' इति भक्षणं श्रुतम् । तत्र भक्षणे होमश्च अभिषवश्च प्रत्येकं निमित्तं यथा पञ्चशरावे प्रत्येकस्य हविषः आर्तिः निमित्त तद्वत् इति पूर्वपक्षमाह । होमश्च अभिषवश्च होमाभिषवौ । होमाभिषवाभ्यां संयुक्तं होमाभिषवसंयुक्तम् । होमाभिषवसंयुक्तं च तत् भक्षणं च होमाभिषवभक्षणं इति शाकपार्थिवादिवत् समासः । तद्वत् हविरार्तिवत् इत्यर्थः । चकारेण दृष्टान्तसंगतिरुक्ता ।

## उभाभ्यां वा, नहि तयोर्धर्मशास्त्रम् । २५ ॥

होमाभिषवभक्षणे होमश्च अभिषवश्च प्रत्येकं निमित्तं इति पूर्वपक्षे प्राप्ते वाशब्देन निवारयन् सिद्धान्तमाह उभाभ्याम् । होमाभिषवाभ्यां मिलिताभ्यामेव निमित्तेन सोमभक्षः स्यात्, न प्रत्येकं निमित्तेन । तयोः होमाभिषवयोः धर्मस्य भक्षणस्य शास्त्रं विधानं नहि, नास्त्येव । यदि तयोर्धर्मो विधीयेत ततो होमाभिषवौ प्रधाने इति भक्षणं गुणः प्रतिप्रधानं भिद्येत । अथ पुनः उभाभ्यां निमित्ताभ्यां भक्षणं विधीयते । तस्मिन् विहिते एकोऽर्थो विहितो भवति, तेन एकं वाक्यम् । तदेतावति पर्यवसितं भवति 'अभिषुत्य हुत्वा भक्षयन्ति' इति । तेन उभौ मिलितौ निमित्तं इति सिद्धान्तः । के.

• होमावृत्तिः दर्शादौ भेदनादिनिमित्तावृत्त्या । वि. ६।२।९.

• होमतन्त्रत्वम् । युगपदनेककपालभेदने होमतन्त्रत्वम् वारुण्येष्टेः तन्त्रत्वप्रसक्तौ । भाट्ट. ५।२।२.

• होमदानपात्रानामुत्कर्षो दीक्षाकालोत्कर्षे । ६।९।१०।३८–३९. मीको. पृ. २१०८ 'दीक्षोत्कर्षे अग्निहोत्रादीनामपि उत्कर्षः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

• होमपाकयोः अर्थतः क्रमः । वि. ५।१।२.

• होमपादः । संकर्ष. २।४।१–३०.

• होममात्रे चोदिते वेदाध्यायी शक्तः इत्यधिक्रियते, नाविद्वान् । भा. ३।८।८।१८.

• होममात्ररूपेण फले विहितस्य कर्मणः द्रव्यादिग्रहणे विरोधाभावः । सु. पृ. ७१७.

## होमलक्षणम् ॥

तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् । ४।२।१३।२८ ॥

भाष्यम्— अथ किंलक्षणको जुहोतिरिति । यदुक्ते यजत्युक्तेऽर्थे जुहोतिः श्रूयते, आसेचनाधिके । तस्मात् यजतिरेवाऽऽसेचनाधिको जुहोतिः । हुतमनेनेत्येवंजातीयके वक्तारो भवन्ति लोके । वेदेऽपि यजतिचोदितं जुहोतिनाऽनुवदति । 'संग्रामिणं चतुर्होत्रा याजयेत्', 'चतुर्गृहीतमाज्यं कृत्वा चतुर्होतारं व्याचक्षीत, पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धम्' इति । अथ ददातिः किंलक्षणक इति । आत्मनः स्वत्वनिवृत्तिः, परस्य स्वत्वेन सम्बन्धः । यजतिददातिजुहोतिषु सर्वेषूत्सर्गः समानः । तत्र यजतिर्देवतामुद्दिश्योत्सर्गमात्रम्, जुहोतिरासेचनाधिकः, ददातिरुत्सर्गपूर्वकः परस्वत्वेन सम्बन्ध इत्येष एषां विशेष इति ।

[ शा– वि–भाट्ट–मन्येषु इदमधिकरणं पूर्वाधिकरणे अन्तर्भावितम् । ]

मण्डन— 'प्रक्षेपयुक्तो यजिरेव होमः ।' 'त्याग. परस्वीकरणं च दानम् ।'

शंकर— 'होमलक्षणमेव च ।' 'दानलक्षणमप्येवम् ।' 'प्रभेदो यागहोमयोः ।' 'द्रव्यदेवतात्यागो यागो होम आसेचनाधिकः ।'

• होमवत् । अवदानस्य होमवत् इति संस्कारकत्वात् प्रत्येकानुष्ठानं किं न स्यादिति चेत्, प्रत्येकं साहित्यानवगतेः । भाट्ट. ५।२।७.

• होमसाधनत्वेन पिठरादय. स्रुवेण विकल्प्यन्ते, 'स्रुवेण जुहोति' इति विधाय 'तेन ह्यन्नं क्रियते' इति हेतुसमर्पणात् इति पूर्वः पक्षः । हेत्वर्थवादः, स्तुतिस्तु प्रयोजनोऽभ्युक्ता इति साकाङ्क्षत्वात् 'तेन ह्यन्नं क्रियते' इति वाक्य इति सिद्धान्तः । चि. १।२।३.

• होलाका वसन्तोत्सवः । नि. १।३।८.

§ होलाकाधिकरणम् । होलाका सर्वलोकधर्मः, न प्राच्यानामेव ॥

अनुमानव्यवस्थानात् तत्संयुक्तं प्रमाणं स्यात् । १।३।८।१५ ॥

भाष्यम्— अनुमानात् स्मृत्याचाराणां च प्रामाण्यमिष्यते । येनैव हेतुना ते प्रमाणं तेनैव व्यवस्थिता प्रामाण्यमर्हन्ति । तस्मात् होलाकादयः प्राच्यैरेव कर्तव्याः, आह्नीनैबुकादयो दाक्षिणात्यैरेव, उद्वृषभयज्ञादय उदीच्यैरेव । यथा शिखाकल्पो व्यवतिष्ठते 'केचित् त्रिशिखाः केचित् पञ्चशिखाः' इति ।

वा— 'देशधर्माननुदाहृत्य संशयेनाद्विचार्यते ॥ किं व्यवस्थितमूलत्वं किं वैषां सर्वधर्मता । विध्यर्थप्रतिषेधार्थाः क्रियावर्जनचिह्निताः ॥ इह सर्वे सदाचारा विचार्याश्च विभागशः । प्राच्या यानाचरन्ति धर्मांश्च साधवः ॥ तेषामेवोपदिष्टास्ते सर्वेषां वेति चिन्त्यते । एवं ये दाक्षिणात्यानां प्रतीच्यानां च केचन ॥ उदीच्यानां तथाऽऽचारा विचार्याः सर्व एव ते । आद्यं सूत्रद्वयं चाद्यदिहाप्यत्र चिन्त्यताम् ॥ गृह्यगौतमसूत्रादिष्वपस्थानमर्थगामिनि ॥' पुरुषमात्रविशिष्ट-सर्वनिरिक्षीनामविशेषस्मृतिनिबन्धहारीतगौतमबौधायनादिनीतधर्मशास्त्रगृह्यग्रन्थानां च प्रतिशाखनियमव्यतिरिक्त पाठ्यमात्रोपलभ्यते । तद्यथा, गौतमीयगोभिलीये छन्दोगैरेव च परिगृह्येते । वासिष्ठं बह्वृचैरेव, शङ्खलिखितोक्तं च वाजसनेयिभिः । आपस्तम्बीयबौधायनीये तैत्तिरीयैरेव पठ्येते इत्येवं तत्र तत्र गृह्यग्रन्थसम्प्रदायादि दर्शयित्वा विचारयितव्यम् । किं तानि तेषामेव प्रमाणान्युत सर्वाणि सर्वेषामिति । 'किं तावत्प्रतिपत्तव्यं व्यवस्थैवेति पाठतः । न ह्यन्यत्र स्थिताल्लिङ्गाल्लिङ्ग्यन्यत्रानुमीयते ॥' अनुमीयतेऽनेनेत्यनुमानं लिङ्गमेवोच्यते । 'तत्र व्यवस्थितं दृष्ट्वा लिङ्गी तत्रैव गम्यताम् । विधिर्वा प्रतिषेधो वा न हि सोऽन्यत्र लिङ्ग्यते ॥' तत्र प्राच्यामहाजनाचारात्मकाल्लिङ्गाल्लिङ्गिनौ विधिप्रतिषेधावनुमीयमानौ तद्विषयावेवानुमातुं शक्येते नान्यगतौ । कुतः । 'अन्यदेशस्थिताद् धूमाद् देशान्तरगतोऽनलः । प्रमीयते न चादृष्टधूमैरिति हि निश्चितम् ॥ यथोपनयनं येषामाधानं च विधीयते । तेषामेवाग्निहोत्रादिविधिरप्यवगम्यते ॥ यथा च जातिवद्वेदगुणधर्मा व्यवस्थिताः । तथैव देशधर्मादिव्यवस्थाऽपि भविष्यति ॥ यदि स्यात् सर्वगामित्वं विधानप्रतिषेधयोः । आचारोऽपि तथैव स्यात् तदाचारस्य संभवात् ॥' सर्वैरेव तावदाचर्यमाणो व्यापारः सर्वदेशगतशिष्टपुरुषैः अग्निहोत्रादिवदनुष्ठीयेत । 'यस्तु तं विनियोगेन कुरुते तद्व्यवस्थितम् । तेन नूनं श्रुतिः काऽपि तेषामेवं विधायिका ॥ अन्यथाऽनुपपत्त्या च श्रुतिरत्र प्रतीयते । तस्मात्तदनुपपत्त्या च सा तावत्यवधार्यते ॥' तस्मादेव देशाचारेऽप्य यत्रादिभ्योऽन्यथा नोपपद्यते यदि श्रुतिमूलत्वं नाभ्युपगम्यते । मूलत्वेन तस्यास्तदव्यवस्थितत्वेनैव साऽभ्युपगन्तव्या । तथा चोक्तम् । यदि च हेतुवन्निगदा निर्देशादिति । 'यथा च हेतुः शूर्पहोमे निर्धार्यते । तस्मात्तत्रैवास्य दृष्टान्तमपि कल्पयेम् ॥ यद्वशकरणं शूर्पं तेन तेनैव इष्यते । तत्राग्निहोत्रम्: स्यात्र दर्विपिठरादिषु ॥' एवं व्यवस्थितान् दृष्ट्वा देशाचारान्

दूषयित्वा पूर्वमेव समर्थयमानः सूत्रगतयावच्छ्रुति-विधानशब्दजनितभ्रान्तिनिविधिभावनयोश्च भेदमनवधानुमय-स्वरूपनिरूपणपर्यनुयोगभावात्तावार्याधिकरणसिद्धान्त-विनाशयनेनमाह भाव इति चाऽनाख्येयः स्वधर्मेणा-न्वत शब्दज्ञानाख्यकारकत्वादिति ।

तेन यः कश्चिदाम्नातमयथार्थतत्त्व जिज्ञासमानः पृच्छति कः पुनरत्र भावो भावना चेति स प्रत्यनन्य-शब्दाख्येयत्वात् केवलप्रत्ययप्रयोगदर्शनाभावाच्च सर्व-धात्वर्थसामान्यवचनकरोतिपदनिर्दिष्टानुचारणमानेनैवोत्तर दाप्यते कुर्यादित्युक्तः इत्यर्थः, सर्वेश्चाऽऽख्यायमानोऽर्थे आकृतिरूपेण चाऽऽख्यातेन व्यक्त्याकृतिगोचरावि-शान्तिश्च क्रियाऽऽख्यातशब्देनोपायरहितत्वादनाख्येयो-ऽप्यर्थ इति । तदेव क्रियानेनापि ग्रन्थेनोक्तं भाष्य-कारेण । 'न तस्याऽऽकृतिवचनता न्याय्या न व्यक्ति-वचनता ' इति । विधानशब्दो हि सूत्रे पूर्वं प्रकृतस्तमेव तच्छब्देन निर्दिश्य व्यक्त्याकृतिवचनत्वादपनयति । 'कुर्यादित्युच्यमानो हि करोमीति प्रपद्यते । न विधेर्भावना वा या सामान्यव्यक्तिरूपताम् ॥' यदिदमर्थतत्त्वमेवानुपपत्तिकं च श्रुतिसामान्यमात्रेणा-न्यापदेश सत्त्वनु गृह्णादिमन्त्रवद्गाप्यतद्धाभिधेनार्थन्यायेन समत्वाभिलषित प्रकाशयताऽन्यस्मिन्नेवार्थे योजितम् ।

देशान्तरस्थपर्मोपपत्तिविचारणार्थोऽयं ग्रन्थ, स यदि पूर्वपक्षता प्रामाण्योपपदनिराकरणविषयत्वेन वर्ण्यते तत्र प्रत्यक्ष्यमाख्यानेन संबध्यते यथोक्तन्यायमार्गेण । यदि तु तदन्तरितत्वेनाऽऽम्नातप्रत्ययार्थानामनाख्येयत्वापत्ति-मेव व्यक्त्याकृतिरहितार्थत्वेन वर्णयेत्ततोऽन्यन्त्वासम्बन्धानु-पयुक्तमानविचारसिकार्थत्वेन हेय एव स्यात् । यथाहि- 'यथा वा प्रमाणग्रन्थस्य न व्यक्त्याकृतिवाचिता । माभूत्तद्विहितं धर्मं सर्वार्थमिति विस्मयः ॥' यदि नाम होलाकादिप्रत्ययो भावनाया विधेर्वा व्यक्ति-माकृतिं वा पदेषु होलाकादयः प्रतिनियतदेश धर्मो सर्वपुरुषान् व्यक्त्याकृतिविनिर्मुक्तोऽन्यपदेशो देशकालादिरहितत्वार्थनिश्चय. सर्वपुरुषधर्म इत्येव वैफल्यानभ्युपगमोदाहरणे स्पष्टमेव स्यात् । 'अनाख्ये-यत्वमुक्त्वा च पर्यायैः स्वविकल्पितैः । अन्वा-ख्यानं कृतं तत्र पूर्वोक्तेन निरुध्यते ॥' विष्णुपदेशकर्त्ययनामाननाशब्दाना प्रत्यन्तादभूतमेव वहुभाषित्वप्रत्यायनापरपर्यायत्वमध्यारोप्य आनन्तर्येण स्वयमनाख्येयत्वमतीव स्थापितम् । यद्यपि तावदा-ख्यातप्रत्यय कर्तृशक्तिप्रत्यायाद् यमात्र वा वदेत्तथापि 'ब्राह्मणो यजमानः ' इत्येवमुपपदार्थीनविशेषाख्या-नेऽपाचदर्शनज्ञात्यादिवृत्तित्वमनुपलभ्यमानो न स्वयत्नप्र-त्यायकवृत्तिवचनत्वविचाराधीनाधिकारित्वनिर्णय, व्यक्तिक-मुत यदा कर्माभिधाननिरपेक्षविधिमात्रतादिमात्रत्वचिरत-मेवाख्यास्यते । यदि चैताकन्मात्रमेव सर्वधर्मत्वकारण भवेत्ततो राजसूयाश्वमेधवैश्यस्तोमादीनामप्येवमाख्या-ख्यातप्रत्ययनिर्देशत्वाविशेषात्सर्वधर्मत्वप्रसङ्गः । अथ तेषामनिर्देश्यार्थप्रत्ययविहितानामपि राजादिपदश्रवणाद-सर्वधर्मत्वम् । एवं तथाप्यसर्वधर्मत्वादिना तदेवो-पन्यसनीयम् । सर्वधर्मत्वादिना च निराकर्त्तव्यम् । यथाऽऽचारानुमानव्यक्त्याकृतिवचनतासंभवात्सामर्थ्यं लभ्यमनुपपत्तिमात्राधिकारनिवर्तेषां निराकृतमेव । तथा चोत्तरसूत्राणि 'लिङ्गाभावाच्च नित्यस्य' 'आख्या हि देशसंयोगात्' इत्येवमादीन्युपन्यासोप-न्यासमन्यास्यानार्थानि सम्पद्यन्ते । तस्मात्सर्वाधिकार-न्यायस्याद्विधानस्य अवस्थितदेशाचारगृह्यधर्मसूत्रनिबद्ध-धर्माणामपि सर्वधर्मत्वम् ।

दर्शनाद्विनियोग स्यात् । १७ ॥

भाष्यम्— अथ यदुक्तं यथा शिष्टाचारो व्यव-स्थितो इति सोऽयं तदन्यथा शिष्टाचार्यतराणां दर्शनं स्पष्टम् ।

वा— यत्तु जातिगुणोपधर्मवद्व्यवस्थितविज्ञा-नमिति । 'सर्वेष्वशब्दवाच्यानां जात्यादीनां व्यव-स्थया । दर्शनाद्विनियोगः स्यात्पश्वादित्वादिधर्म-वत् ॥' यथैव पश्वादित्वं तु भृगूणां वसिष्ठशुनकादि-कण्वश्वकाण्वादिविराजन्यानां नाराशंसो द्वितीय प्रयाज-स्तनूनपादन्येषामित्यन्वयनो व्यतिरेकतोऽपि श्रुतधर्मप्रव-त्यवस्थितविकल्पवतान तथैव प्रतिज्ञाविशेषानियत-

निमित्तेन लिङ्गादित्वस्य व्यवस्थितविधिविशेषानुमानोपपत्तिरस्तीति दृष्टान्तदार्ष्टान्तिकवैषम्यम् ।

लिङ्गाभावाच्च नित्यस्य ॥ १८ ॥

भाष्यम्— इदं पदेऽस्य कस्यचिदुत्तरं सूत्रम् । कानि तानि पदानि ? अथ किमर्थं न लिङ्गाद् व्यवस्था ? यथा 'शुक्लो होता' इति । नास्ति तन्नित्यमेषां लिङ्गम्, यद्यथादर्शनमनुसरति । येऽपि श्यामा वृद्धा लोहिताक्षास्तेऽपि न सर्वे आह्नीनैबुकादीन् कुर्वते । अनेकलिङ्गा अपि चानुतिष्ठन्ति । तस्मान्न व्यवस्था । शुक्लो होतेति प्रत्यक्षा श्रुतिः ।

वा— 'व्यक्त्याकृत्यभिधेयेऽर्थे प्रत्याख्याते विशेषणे । लोहिताक्षादिचिह्नानामधुनाऽन्या निराक्रिया ॥' जातिव्यक्तिवाच्युपपदाभावेऽपि कर्तृगतसंस्थानवर्णादिगुणविशेषोपलक्षणेन कृष्णकेशाधानवत् अधिकारनियमः सेत्स्यतीत्याशङ्क्य निराक्रियते— 'लिङ्गाभावाच्च नित्यस्य नास्ति कर्तृविशेषणम् । नियतेन हि लिङ्गेन नित्यं कर्तोपलभ्यते ॥ यच्चेह दाक्षिणात्यानां लोहिताक्षादि कल्प्यते । अन्येषामपि तद्दृष्टं तदनाचरतामपि ॥ दृष्टमाचरणं चैतत्तच्चिह्नरहितेष्वपि । तस्मान्नाव स्थितैश्चिह्नैर्नाधिकारो विशेष्यते ॥' यत्तु लिङ्गविशेषणं नित्यशब्दं मन्यते तस्य तत्संबन्धीभूतलिङ्गसापेक्षत्वादसमर्थसमासप्रसङ्गः । ननु लिङ्गशब्दस्य नित्यसापेक्षत्वात् स्वार्थाविनाभावत्वेन सामर्थ्यविघाताभावात् भवितव्यमेवेह समासेन देवदत्तस्य गुरुकुलमिति यथा । नैतत्तुल्यमनेनेष्टमपेक्षान्तरसङ्गतेः । नित्यं नापेक्षते लिङ्गं देवदत्तं यथा गुरुः ॥' गुरुशब्दस्य हि शिष्यापेक्ष एव आत्मलाभ इति देवदत्तसम्बन्धोपात्तशिष्यसम्बन्धाभिधानेन तदीयस्वार्थत्वात्पदान्तरेणापि सामर्थ्यप्रतिघप्रसङ्गः । 'इह चिह्नस्य लिङ्गत्वं गम्यते लिङ्ग्यपेक्षया । न च लिङ्ग्यभिधायीतन्नित्यस्येति पदं मतम् ॥' यद्यपि चैवं गम्यगमकभावे सति लिङ्गशब्दः प्रवर्तते तथाऽपि गुरुशिष्यपितापुत्रादिशब्दवन्नाम्य तत्प्रवृत्ति-

निमित्तसम्बन्धिशब्दत्वप्रसिद्धिः । 'लिङ्गी यौगिकशब्दत्वात्सदा लिङ्गमपेक्षते । लिङ्गशब्दस्तु धात्वर्थं मुक्त्वा नान्यदपेक्षते ॥' लिङ्ग्यतेऽनेनेति हि क्रियायोगनिमित्तो यद्यपि लिङ्गशब्द इति न सम्बन्धिशब्दत्वेनोच्यते तथाऽपि तु क्रियागतकारकान्तरापेक्षा न मुञ्चतीति कामं 'लिङ्गिनो लिङ्गदर्शनम्' इत्यादौ भवेदप्यसामर्थ्यपरिहारः । नित्यस्य पुनर्लब्धसत्ताकलिङ्गापेक्षितं तद्धर्मतया पद्मप्रोपनीयत इति तत्सम्बन्धापेक्षाया अपरिहार्योऽसामर्थ्यप्रसङ्गः । तस्मान्नित्यस्येति नियतचिह्नोपलक्ष्यकर्तृविशेषणमेवाधिकारविशेषणं वा नियतस्य कर्तुर्नियमस्याधिकारस्य वा न प्रतिपादकं किंचिच्चिह्नमस्तीति न तदभिधाय्युपपदविशेषितव्यवस्थितहोलाकादिविधानोपपत्तिः ।

आख्या हि देशसंयोगात् ॥ १९ ॥

भाष्यम्— अथ कस्मान्न समाख्यया नियमः । ये दाक्षिणात्या इति समाख्यातास्ते आह्नीनैबुकादीन् करिष्यन्ति, ये उदीच्या इति समाख्यातास्ते उद्वृषभयज्ञादीन्, ये प्राच्या इति ते होलाकादीन् । यथा, 'राजा राजसूयेन' इति । नैतदेवम् । देशसंयोगादाख्या भवति । दक्षिणदेशान्निर्गत उदक्षु वा प्राक्षु वाऽवस्थित आह्नीनैबुकादीन् करोत्येव । उदीच्याश्च देशान्तरे उद्वृषभयज्ञादीन्, प्राच्याश्च होलाकादीन् । अन्यदेशाश्च देशान्तरगतो न नियोगतः परपदार्थान् करोति । तस्मान्न व्यवस्था । 'राजा राजसूयेन' इति तु नियता जातिः ।

वा— 'इदानीं तु यदाचारमत्यन्तमनुवर्तते । तत्प्राच्यादिसमाख्यानमुपन्यस्तं विशेषणम् ॥' सर्वे हि देशाचाराः प्राच्यदाक्षिणात्यादिसमाख्यातैः पुरुषैः क्रियन्ते समाख्यावर्जितेषु च नोपलभ्यन्ते । तस्मात् समाख्याविशिष्टविध्यनुमानात् तत्संयुक्तप्रमाणत्वमेव न्याय्यमिति । तत्र समाधिः । 'आख्या हि देशसंयोगात्समस्तकर्तृषु वर्तते । आचाराणामतः प्राप्तो विधिर्देशविशेषणः ॥ देशश्च दिग्विशिष्टः स्यादिग्रूपं चानवस्थितम् । न च तद्देशसम्बन्धादनाचारोऽनुवर्तते ॥ निर्गतेष्वपि दृष्टत्वात्तद्गतेष्वप्य

